॥ श्रीः ॥

# ॥ श्रुतिरत्नप्रकाशः ॥

## ॥ श्रुतिमतोद्द्योतश्च ॥

भट्टश्री त्र्यंबकशास्त्रिवरप्रणीतः

---

मायूरस्थ

## कामाक्षीविरचितया

संक्षिप्तटिप्पण्या

समेतः

---

**PUBLISHED BY**

***KAMAKSHI AMMA***

**AT MAYAVARAM.**

---

**Printed at the**

**SRI VIDYA PRESS, KUMBAKONAM.**

---

*[Copy Right]* **1910.** *[Registered.*

---

**Price As. 12.**

॥ श्रीः ॥

# ॥ श्रुतिरत्नप्रकाशः ॥

## ॥ श्रुतिमतोद्द्योतश्च ॥

भट्टश्री त्र्यंबकशास्त्रिवरप्रणीतः

मायूरस्थ

कामाक्षीविरचितया

संक्षिप्तटिप्पण्या

समेतः

PUBLISHED BY

*KAMAKSHI AMMA*

AT MAYAVARAM.

Printed at the

SRI VIDYA PRESS, KUMBAKONAM.



1910.



Price As. 12.

॥ श्रीगणेशाय नमः ॥

छायानायकरोहिणीसहचरस्वाहापतिस्वेक्षणं
हेयाधेयविलक्षणं श्रुतिशिरोवाक्यप्रमाणेक्षणम् ।
कायमाणहृषीकबुद्धिमनसा कामान्तकं साक्षिणं
मायादूरविधूननाय सततं मायूरनाथं भजे ॥ १ ॥

चन्द्रालंकृतये जगत्प्रकृतये जन्माद्यनुख्यातये
सान्द्रानन्दविभूतये स्वरतये स्वाभिन्नविख्यातये ।
मायूररतये सुतुष्टमनये मायापराभूतये
श्रेयोदाय्यभयाम्बिकाधिपतये श्रेयः परं मङ्गलम् ॥ २ ॥

त्र्यंबकशास्त्री—

अयं किल पुनादेशमण्डलमण्डनं तत्रचतुष्टयपारदृश्वा श्रुतिरत्नप्रकाश श्रुतिमतोद्द्योतादिनानाप्रकरणवरप्रणेता ।

विरळप्रचारतयातिदुर्लभासु एतदीयकृतिषु महता प्रयत्नेन समासादितोऽयं ग्रन्थः यथामति कामाक्षीविरचितया टिप्पण्या समयोजि ।

कामाक्षी—

इयं किल अद्वैतदीपिकायाः श्रुतिरत्नप्रकाशादिटिप्पण्याश्च प्रणेत्री मायूरपुरे कवेरजातीरवास्तव्या दुवासूरामस्वाम्यय्याख्यस्य द्विजन्मनः कुलसंभवा । यः किल वर्षशतात्पूर्वतनः मायूरपुरे कवेरजातीरे दुवासग्रहारं निर्माय ब्राह्मणेभ्यो वितताार ।

इयं किल यदा एकोनविंशेवर्षे स्वभर्त्रा यनमंडू वी. ए. रामलिंगय्यनाम्ना लोकान्तरं गतेन व्ययोजि । तदाप्रभृति स्वमात्रादिसाहाय्येन गीर्वाणविद्यायां चिरतराभ्यासेन पाण्डित्यमलभत । अद्यापि स्वानुजन्मना राव् बहदूर् सि एस् सुब्रह्मण्यय्याख्येन पोपिनैव वर्तते ॥

# ॥ श्रुतिरत्नप्रकाशः ॥

श्रीगणेशाय नमः ॥ सत्यज्ञानानंदलक्ष्यपरिच्छेदविवर्जितम् । अस्पृष्टानर्थमनिशमाश्रये नृहरेः पदम् ॥

ननु कथमात्मनः परिच्छेदशून्यत्वं तस्य प्रत्यक्षादिसिद्धपारमार्थिकलौकिकवियदादिविलक्षणत्वेन वस्तुतः परिच्छिन्नत्वादिति चेन्न । विमतं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वात् शुक्तिरूप्यवदित्यादिजीवब्रह्माभेदपरश्रुत्यनुगृहीतबलवदनुमानबाधित विषयेण प्रत्यक्षादिना वियदादेः पारमार्थिकत्वासिद्धेः । ननु किमिदं मिथ्यात्वं अनिर्वचनीयत्वंवा असत्त्वं वा सद्विविक्तत्वं वा प्रमाणाविषयत्वं वा अप्रमाणविषयत्वं वा अविद्यातत्कार्यान्यतरत्वंवा स्वात्यंताभावसमानाधिकरणतयाप्रतीयमानत्वं वा । नाद्यः अनिर्वचनीयत्वस्य निर्वचनविरहरूपत्वेन स्वाभ्युपगतव्यवहारविरोधात् । यदिच निर्वाच्यविरहस्तथापि सत्त्वविरहो वा असत्त्वविरहोवा नाद्यः असतोऽनिर्वचनीयतापातात् । नोत्तरः ब्रह्मणोऽनिर्वाच्यतापातात् । अथ सदसद्विलक्षणत्वं मिथ्यात्वं तदपि न सद्रूपत्वेपि जगतोऽसद्रूपत्वाभावेन सदसदुभयविलक्षणतया सिद्धसाधनात् । अथ प्रत्येकमुभयवैलक्ष्यण्यं विवक्षितं तथापि सति सदन्तरभेदस्यासद्भेदस्यापि सिद्धत्वेन उक्तदोषतादवस्थ्यात् । एतेन सदसत्त्वानधिकरणत्वमनिर्वचनीयत्वमिति निरस्तं । प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं नयत् । गाहते तदनिर्वाच्यमाहु र्वेदान्तवादिन इति चेन्न तादृग्वस्तुनोऽप्रसिद्धत्वेनाप्रसिद्धविशेषणत्वात् । असत्त्वविरहे सत्त्वस्य सत्त्वविरहेऽसत्त्वस्य नियतत्वेनोभयराहित्यस्य व्याहतत्वात् । ननु निषेधसमुच्चयस्यातात्त्विकत्वेनाभ्युपगमान्नव्याघातः । तत्प्रतियोगिनिरूपकतामात्रप्रकटनाय तत्तद्विलक्षणत्वाभिलापइति चेन्मैवं । तथासति तस्याप्यनिर्वचनीयतापातात् । यथाखलु सत्त्वासत्त्वे तव मते दुर्निरूपत्वात्

न जगतो विद्येते तथाऽनिर्वचनीयताया अपि दुर्निरूपत्वेन तद्भावो ध्रुवः स्यात्। ननु असत्त्वविरहे सत्त्वमित्यादिव्याप्त्यसिद्धेः न व्याहतिरिति चेन्न। आत्मादौ व्याप्तिसंभवात्। तत्रात्मत्वप्रयुक्तं सत्त्वमिति चेत् किमिदमात्मत्वं जातिविशेषोवा सत्त्वं वा अबाध्यत्त्वं वा ज्ञानाधारत्वं वा स्वप्रकाशत्वं वा आत्मपदवाच्यत्वंवा तल्लक्ष्यत्वं वा। नाद्यः आत्मनएकत्वेन तत्र जातेरयोगात्। कल्पितात्मभेदसद्भावेनैव मितिचेन्न। कल्पितात्मनां पक्षनिक्षिप्ततया तस्यापाधित्वात्। न द्वितीयः साध्याविशिष्टत्वात्। नतृतीयः असाति व्यभिचारात्। तस्यापि बाध्यत्वे नासत्त्वस्यास्ति बाधकमिति स्ववचनविरोधः। नच चतुर्थः पक्षैकदेशाव्यावृत्तेः। न पंचमः आत्मन्यभावात्। तद्वतस्तस्य पक्षनिक्षेपात्। स्वप्रकाशताया उपर्यपाकरणात्। न षष्ठः आत्मन्यभावात्। नान्त्यः पक्षाव्यावृत्तेः। किंच सदसद्विलक्षणत्वे मानं विवादपदं सदसद्विलक्षणमिति प्रतिज्ञायां पक्षस्याप्रसिद्धविशेषणत्वप्रसंगात्। सच्चेन्न बाध्येत असच्चेन्न प्रतीयेतेत्यर्थापत्तिरेवानिर्वचनीयत्वे मानमिति चेन्न। सच्चेदित्यत्र विवक्षितसत्तापरजातिः अबाध्यता उत ब्रह्मता वा नाद्यः तादृशजातिमतो घटादेस्त्वन्मते बाध्यत्वात्। न द्वितीयः आपाद्याविशिष्टत्वात्। न तृतीयः सिद्धसाधनात्। असच्चेन्न प्रतीयेतेत्यत्र असत्त्वेन प्रतीतिर्विवक्षिता उत सत्त्वेन। आद्ये असद्व्यवहारलोपप्रसंगः। द्वितीये भ्रान्तव्यवहारलोपप्रसंगः। प्रकृतादन्यात्मना प्रतीतेरेव भ्रान्तित्वात्। तत्र चान्याकारस्यासतस्सत्त्वेन प्रतिभासांगीकारात्। तस्याप्यनिर्वचनीयत्वं ब्रूप इति चेत् तदापि किं प्रकृतेनैव रूपेण प्रतीयते अन्याकारेण वा। आद्ये भ्रान्तव्यवहारलोपप्रसंगः। द्वितीये असतःसत्त्वेन प्रतीतिरनिवार्या। यदिच तस्याप्यनिर्वचनीयत्वं तदाऽनवस्था। तथाच निर्णयदर्शनं दुश्शकं प्रपद्येत। अपसिद्धान्तात्। न तृतीयः विचारासहत्वात्। तथाहि किमिदं सद्विविक्तत्वं परजातिविरहः परब्रह्मान्यत्वं

वा असत्त्वं वा अबाध्येतरत्वं वा। नाद्यः त्वयापि जगति आविद्य-
कजातेरनिवारणात्। न द्वितीयः सिद्धसाधनात्। न तृतीयः अप-
सिद्धान्तात्। न चतुर्थः ब्रह्मेतरत्वाभ्युपगमे सिद्धसाधनात्। अबाध्ये-
तरत्वं बाध्यत्वमितिचेत् तत्किं अन्यथा ज्ञातस्य सम्यग्विज्ञातत्वं उत
प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं। नाद्यः अस्माभिरपि क्षणिकत्वा-
दिना विज्ञातस्य जगतः स्थिरत्वादिना ज्ञातत्वाभ्युपगमात्। द्वितीयेऽपि
किमेतद्देशकालप्रतिपन्नस्य देशकालान्तरगतप्रतिषेधप्रतियोगित्वं उत
त्रिकालाखिलदेशीयनिषेधप्रतियोगित्वं। नाद्यः अंशतस्सिद्धसाध-
नात्। रीत्यन्तरेणानित्यत्वादेरेवोक्तत्वात्। न द्वितीयः नित्यसर्व-
गतयोः कालदेशयोस्तादृशबाधज्ञाने व्याघातात्। काचेयं प्रतिपन्नता
प्रमाणप्रतिपन्नतावा भ्रान्तिप्रतिपन्नतावा। नाद्यः प्रमाणप्रतिपन्नस्य
बाध्यत्वसाधने अतिप्रसंगात्। न द्वितीयः तत्र निषेधस्याभावरूपत्वे
ऽत्यन्तासत्त्वापातात्। सद्विविक्तत्वस्यान्यस्या निरूपणात्। चतुर्थेऽपि
यत्किंचित्प्रमाणाविषयत्वविवक्षायां सिद्धसाधनात्। यावत्प्रमाणा-
विषयत्वसाधने ब्रह्मण्यतिप्रसंगः। तस्य परैरदृश्यत्वाभ्युपगमात्।
प्रमाणाविषयत्वे प्रपंचस्य पक्षीकरणायोगाच्च। प्रत्यक्षादिसिद्धत्वात्त-
स्य पक्षतेति चेन्न। प्रत्यक्षादेरतत्त्वावेदकत्वे मानाभावात्। विषया-
सत्त्वादेव तत्सिद्धिरिति चेन्न तस्यैवासिद्धेः। किंच अतत्त्वावेदकं
प्रमाणं चेत् व्याघातः। अन्यथा शुक्तिरजतादिज्ञानस्य प्रमाणता
किं न स्यात् प्रमाणं चेन्नातत्त्वावेदकं। न पंचमः सर्वं क्षणिकमित्या-
दिभ्रमप्रतिपन्नस्य जगतो स्माभिरभ्युपगमात्। भ्रमैकप्रतीतत्वं वि-
वक्षितमिति चेन्न। तथासति अत्यन्तासत्त्वापत्तेः अपसिद्धान्तात् ना-
पि षष्ठः अविद्यायाः लक्षणतः प्रमाणतश्च दुर्निरूपत्वात्। न सप्तमः
अत्यन्ताभावपदेनासत्त्वविवक्षायामपसिद्धान्तापातात्। तदतिरिक्त-
स्याप्रसिद्धत्वात्। भाववैलक्षण्यं तदर्थ इतिचेन्न ततएवा सत्त्वापत्त्या
दत्तदोषानिस्तारात्। तस्मान्न मिथ्यात्वं सुवचमितिपूर्वपक्षग्रंथः॥

सिद्धान्तारंभः ॥ १ अत्रोच्यते स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वं। नच दृष्टान्ते साध्यवैकल्यं शुक्तिरजतादेरत्यन्तासत्त्ववादिभिस्तदधिकरणानभ्युपगमादिति वाच्यं। स्वानिरूपितत्व स्वसजातीयनिरूपितत्वोभयाभाववदधिकरणताया एव स्वाधिकरणेत्यनेन विवक्षितत्वात्। साजात्यं च कालसंबंधित्व तदभावान्यतररूपेण। तेन मेयत्वादिना साजात्यस्यातिप्रसक्तत्वेपि न क्षतिः॥ एवं स्वाश्रयनिष्ठत्वमनवच्छिन्नं ग्राह्यं। तेनाव्याप्यवृत्तितामादाय नार्थान्तरं। २ प्रतियोगिता च स्वव्यापकधर्मावच्छिन्ना ग्राह्या।

---

१ स्वाधिकरणेति। स्वं शुक्तिरूप्यं स्वाधिकरणं शुक्तिः तन्निष्ठो योऽभावः रजताभावः स्वाधिकरणमित्यस्य स्वविशिष्टाधिकरणतावदित्यर्थः। अधिकरणतायां वैशिष्ट्यं स्वानिरूपितत्व स्वसजातीयनिरूपितत्वोभयाभाव-त्वसंबंधेन स्वपदेन शुक्तिरूप्यमुपादेयं स्वविशिष्टा याऽधिकरणता शुक्तिनिष्ठाधिकरणता। कथमित्युक्तौ स्वं शुक्तिरूप्यं स्वानिरूपितत्वं शुक्तिनिष्ठाधिकरणतायाः शुक्तिरजतस्यासत्त्वात्। तथापि स्वसजातीयनिरूपितत्वं नास्ति स्वंशुक्तिरूप्यं स्वसजातीयं शशविषाणं तन्निरूपितत्वस्य शुक्तिनिष्ठाधिकरणताया असत्त्वात्। अतः उक्तोभयसंबंधेन स्वविशिष्टाधिकरणता शुक्तिनिष्ठाधिकरणता भवति। कालसंबंधित्वेन रूपेण घटसजातीयः पटः तदभावरूपेण शुक्तिरूप्यसजातीयं शशविषाणं मेयत्वादिरूपेण स्वसजातीयस्य निवेशे शुक्तेः शुक्तिरूप्यविशिष्टाधिकरणत्वं न संभवति। कुत इत्युक्तौ शुक्तिनिष्ठाधिकरणतायाः शुक्तिरूप्यानिरूपितत्वस्य शुक्तिरूप्यसजातीयशुक्तित्वनिरूपितत्वस्य च सत्त्वेनोभयाभावासत्त्वात् अतो मेयत्वेन साजात्यं न विवक्षितं। २ प्रतियोगितायां स्वव्यापकधर्मावच्छिन्नत्वानिवेशे घटादीनां मिथ्यात्वासिद्धिः घटादीनां सत्त्वेपि पटत्वेन घटाभावमादाय स्वाधिकरणवृत्त्यभावप्रतियोगित्वसंभवात्। स्वव्यापकधर्मावच्छिन्नत्वनिवेशे च पटत्वेन घटाभावप्रतियोगितायाः घटनिष्ठायाः स्वव्यापकधर्मावच्छिन्नत्वं न संभवा ति

नातो व्यधिकरणधर्मावच्छिन्नाभावस्य प्रामाणिकत्वेप्यर्थान्तरता। नच स्वसमानाधिकरणप्रातिभासिकात्यन्ताभावप्रतियोगितामादाय सा। ३ प्रातिभासिकस्य प्रतिभासकालमात्रवृत्तितया व्याप्यवृत्तिताया एवाभावात्। ४ अभावस्य ब्रह्मज्ञानेतराबाध्यत्वेन विशेषणीयत्वाद्वा शुक्तिरजतात्यन्ताभावस्यापि व्यावहारिकतया न दृष्टान्तस्य साध्यविकलता। ५ यद्वा स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वं तन्मिथ्यात्वं स्वप्रकारकधीत्वेन भ्रमप्रमासाधारण्येन धीनिवेशाच्च न पूर्वोक्तविकल्पावकाशः। अन्यत्प्राग्वदवसेयं। अथवा। ६ ज्ञाननिवर्त्यत्वं मिथ्यात्वं तच्च ज्ञानप्रयोज्यस्व स्वनिष्ठतादात्म्य-

---

स्वं घटनिष्ठप्रतियोगिता स्वव्यापकधर्मः घटत्वं तदवच्छिन्नत्वस्य प्रतियोगितायामसत्वादिति नघटादीनां मिथ्यात्वासिद्धिः। ३ घटवति ब्रह्मणि प्रातिभासिकघटाभावः अनवच्छिन्नवृत्तिमान्नभवति कुतः घटाभावस्य प्रतिभासकाल एव सत्त्वात्। ४ शुक्तौ शुक्तिरूप्यस्य व्यावहारिकस्यासत्त्वात् शुक्तिरूप्याभावः ब्रह्मज्ञानेनैव बाध्यते। ५ स्वप्रकारकेति। सद्विलक्षणत्वं मिथ्यात्वमित्युक्तौ असत्त्वमादायार्थान्तरापत्तिः अतः स्वप्रकारकधीविशेष्यतेत्युक्तौ असतोऽप्रकारत्वान्नातिव्याप्तिः स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वमिति स्वं शुक्तिरजतं स्वप्रकारकधीः इदं रजतमितिधीः तद्विशेष्यता शुक्तिनिष्ठा तद्व्यापकीभूतो योभावः रजताभावः तत्प्रतियोगित्वं रजतस्य अप्रतियोगि ब्रह्म नैयायिकादिभिः गगनप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वस्य अवृत्तौ गगनेऽनंगीकारात् नार्थान्तरता। ६ ज्ञाननिवर्त्यत्वमिति। स्वं शुक्तिरूप्यं स्वनिष्ठतादात्म्यं शुक्त्यज्ञानतादात्म्यं तत्प्रतियोगि शुक्त्यज्ञानं अन्यतराभावः शुक्तिरूप्यशुक्त्यज्ञानान्यतराभावः स च नेदं रजतमिति ज्ञानप्रयोज्यः। ज्ञाननिवर्त्यत्वमिति। अधिष्ठानसाक्षात्कारे अज्ञानं निवर्तते। जीवन्मुक्तस्य नाज्ञानमुच्छिन्नं संस्कारात्मनासत्त्वात्। अथवा प्रारब्धभोगोपयोगिदेहादिकमज्ञानशब्देनोच्यते। अत्रेदमवसेयं। यत्क्षणे यस्या

प्रतियोग्यन्यतरत्वावच्छिन्नाभावकत्वं । ७ यद्वा स्वसमनाधिकरणात्यन्ताभावीयपारमार्थिकत्वावच्छिन्नप्रतियोगित्वं तत् । पारमार्थिकत्वं च अबाध्यत्वं सर्वं प्रमेयमित्याकारकयत्किंचिद्धीविषयत्वं वा विवेचितं तदन्यत्र न चाद्यसाध्यद्वये तुरीये चात्यन्तासत्त्वमादायार्थान्तरता । स्वाधिकरणेति विशेषितत्वात् । असतोऽधिकरणाप्रसिद्धेः । न च तृतीयसाध्ये दृष्टान्तस्य साध्यविकलता । अन्यथाख्यात्यसत्ख्यात्यो विचारासहत्वेन इदं रजतमित्यादिभ्रमस्थले ८ अनिर्वचनीयरजतादेरुत्पत्तिस्वीकारस्यावश्यकत्वात् शुक्त्यादितत्त्वनिश्चयोत्तरं तन्निवृत्तिदर्शनेन तदत्रस्थितरजतसामान्याभावस्य तादृशनिर्णयप्रयोज्यतानिर्णयात् । तथाहि इदं रजतमित्यादिभ्रमस्थले नात्यन्तासतो भानं युक्तं । सत्यरजतत्वेन भानेऽन्यथा-

---

ज्ञानस्योच्छेद स्तत्क्षणे तत्प्रयुक्तस्यावश्यमुच्छेद इति न नियमः । जीवन्मुक्ताज्ञानस्वीकारपक्षे व्यभिचारात् । नापि यदज्ञानप्रयुक्तोच्छेदः प्रतिबन्धकशून्ये यत्क्षणे यस्याज्ञानस्योच्छेद स्तत्क्षणे तत्प्रयुक्तस्योच्छेद इति नियमः । विदेहत्वप्रयोजकब्रह्मसाक्षात्कारोत्पत्तिक्षणे ब्रह्म साक्षात्करोमीत्यनुभवेनाज्ञानासत्त्वेपि तत्प्रयुक्तमनःपरिणामरूपब्रह्मसाक्षात्कारादिसत्त्वेन व्यभिचारात् । एतादृशोत्पत्तिक्षणे हि किंचित्प्रतिबन्धकमस्ति । किंतु यत्क्षणे या प्रमा तत्क्षणेऽवश्यं तत्समानविषयकाज्ञानोच्छेदः । उक्तप्रतिबन्धकशून्ये यत्क्षणे यस्याज्ञानस्योच्छेदः तदुत्तरक्षणे तत्प्रयुक्तस्योच्छेदः ॥ ७ ॥

७ स्वं घटः स्वाधिकरणं ब्रह्म तद्वृत्तिर्योऽभावः पारमार्थिकत्वेन घटाभावः तत्प्रतियोगी घटः स्वाधिकरणेत्यनिवेशे अत्यन्तासत्त्वमादायार्थान्तरं । अतः स्वाधिकरणवृत्तीत्यभावविशेषणं देयमेव । असतोऽधिकरणाभावेनार्थान्तरायोगात् । ८ अनिर्वनीरजतादेरिति । रजतत्वं त्रिविधं । व्यावहारिकरजतमात्रवृत्ति व्यावहारिकं कटकाद्यर्थक्रियाकारितावच्छेदकं प्रातीतिकरजतमात्रवृत्ति प्रातीतिकं शुक्त्यज्ञान रजतसादृश्यज्ञान कार्यतावच्छेदकं तदुभयसाधारणं

ख्यात्यापत्तेः। न च रजतत्वमपि असदेवेति वाच्यं रजतावृत्तेः रजतत्वशब्दार्थत्वायोगात्। तथाच रजतत्वेनेमं जानामि इदं रजतमित्यभिलापानुपपत्तिः। ९ किंच इष्टतावच्छेदकत्वेन गृहीतधर्मप्रकारकज्ञानस्य प्रवर्तकतया इदं रजतमित्यादिज्ञानस्य प्रवर्तकत्वानुपपत्तिः रजतत्वांशे अन्यथाख्यातिस्वीकारे च किमपराद्धं रजतेन। नन्वेवं सत्पच्याादिमतः भ्रान्तिप्रतीतिसिद्धरजतस्य सत्यत्वमेवोचितमिति भास्करादिः। तदेव साधनीयं स्यादिति चेन्न पार्श्वस्थै रदुष्टकरणै र्व्याप्यवृत्ते रजतात्यन्ताभावस्य गृह्यमाणतया भ्रान्तिसिद्धरजतादेः सत्यत्वानुपपत्तेः। तदुक्तं सच्चे न्न बाध्येतेति। स्वसमनाधिकरणात्यन्ताभावाप्रतियोगि चेत् स्वात्यन्ताभावप्रमाविषयतया न प्रतीयेतेति तदर्थः। अन्यथाख्यात्यसत्ख्याती अन्यत्र निरस्ते। अथात्यन्ताभावप्रतियोगित्वमुक्ताभावप्रतियोगित्वमेव वा ऽत्यन्तासत्त्वमिति चेन्न। ह्रदादिनिष्ठात्यन्ताभावप्रतियोगिनोपि वह्न्यादेः पारमार्थिकत्वस्य तटस्थै रुपगमात्। द्वितीयेपि ईदृग्विधात्यन्तासत्त्वमिष्टमेव। निस्स्वरूपत्वादिलक्षणात्यन्तासत्त्वे तु बाधकमुक्तं। आत्मत्वं चार्थोपलक्षितप्रकाशरूपत्वं। नचैवं ज्ञानमेवात्मेत्युक्तं स्यादिति वाच्यं। इष्टापत्तेः। सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयरूपस्य सत्त्वात्यन्ताभावविशिष्टासत्त्वात्यन्ताभावरूपस्य वा साधनेपि न क्षतिः। न च व्याहतिः। निषेधसमुच्चयस्याप्यतात्विकत्वात् जगति स्वात्यन्ताभावरूपं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमपि न परमार्थं सदिति ज्ञापनाय तदत्यन्ताभावोपि साध्यकोटौ निवेश्यते। सिद्धसाधनवारणाय सत्त्वात्यन्ताभावानिवेशः। केवलसत्त्वात्यन्ताभावसाधने हि मिथ्यात्वं मिथ्या न वेति विकल्पःप्रसज्येत। इदानीं तु मि-

---

रजतपदशक्यतावच्छेदकं च तृतीयं व्यावहारिकमेवेति तत्र सत्त्वस्य व्यावहारिक प्रातीतिक रजतयोरनुगतत्वात्। ९ इष्टतावच्छेदकधर्मः सत्यएव

थ्यात्वस्य मिथ्यात्वमवलंब्यैव साध्यनिर्देशेन नैतादृशविकल्पप्रसरः। नच मिथ्यात्वस्य मिथ्यात्वे जगतस्तात्त्विकत्वापत्तिः। मिथ्यात्वतद्भावयोस्समसत्ताकत्वेन मिथ्यात्वस्य मिथ्यात्वेपि जगतस्सत्यत्वापत्तेरभावात्। अधिकमन्यत्र। वस्तुतस्साध्यप्रविष्टयोस्सत्त्वासत्त्वयोः परस्परविरहत्वस्य परस्परविरहव्यापकत्वस्य चाभावान्नव्याहतिः। १० स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वं हि असत्त्वं। सत्त्वेन प्रतीयमानत्वंच सत्त्वं। नचानयोः परस्परविरहरूपत्वं परस्परविरहव्यापकत्वं वा उभयसंप्रतिपन्नमिथ्याभावे शुक्तिरूप्यादौ प्रत्येकं द्वयोर्व्यतिरेकस्योभयसंप्रतिपन्नस्य सत्त्वात्। न चासतः प्रतीत्यभ्युपगमेन न सत्त्वेन प्रतीयमानत्वं सत्त्वं नाप्यप्रतीयमानत्वमसत्त्वं नवा तद्विलक्षणत्वसाधनेनार्थांतरवारणमिति वाच्यं। अत्यन्तासतः सत्त्वेन प्रतीत्यसिद्धेः। एतेन सत्त्वासत्त्वे एकवस्तुनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वाद्रूपरसवत् इत्यनुमानेन साध्यप्रसिद्धिरित्यपि न युक्तं व्याघातात् वस्तुशब्दस्य सच्छब्दपर्यायत्वात् सत्त्वं सन्निष्ठात्यन्ताभावप्रतियोगीत्यर्थपर्यवसानात्। प्रमेयत्वादावनैकान्तिकता च। अविरुद्धत्वं चोपाधिः। घटत्वाघटत्वे किंचिन्निष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वाद्रूपरसवदित्याभाससाम्यं चेति निरस्तं। वस्तुशब्दस्य धर्मिमात्रपरत्वात् प्रमेयत्वादीनां घटत्वतदन्यत्वादीनां च मिथ्यात्वादेकवस्तुनिष्ठात्यन्ताभावप्रतियोगित्वमस्त्येवेति न व्यभिचारः। यद्यपि तेषां पक्षसमत्वात् संदिग्धानैकान्त्यं।

---

भवतीति भावः। १० स्वं घटः स्वप्रकारकधीः सन्घटइति धीः विशेष्यं सत् विशेष्यता सन्निष्ठा विशेष्यताव्यापकीभूतो योऽभावः घटाभावः प्रतियोगित्वं घटस्य स्वप्रकारकधीपदेन किं प्रमा विवक्षिता आहोस्विद्भ्रमः। नाद्यः व्याघातात्। स्वप्रकारकप्रमाविशेष्ये स्वाभावासंभवात्। न द्वितीयः घटप्रकारकभ्रमविशेष्ये घटस्य सत्यत्वेपि अभावसंभवात्। अतः स्वप्रकारकज्ञानसामान्यं विवक्षितं।

दुर्वारं । तथापि अनुकूलतर्काणां वक्ष्यमाणत्वा न्न दोषः । केचित्तु धर्मत्वं परस्परविरहाव्यापकत्वं तेन प्रमेयत्वादौ घटत्वाघटत्वादौ च न व्यभिचारः । न चाविरुद्धत्वमुपाधिः । प्रकृतसाध्यशालिनोः गोत्वाश्वत्वयोस्तदभावेन साध्याव्यापकत्वात् । घटत्वाघटत्वयोरेकवस्तुनिष्ठात्यन्ताभावप्रतियोगित्वे व्याघतप्रसंगात् उक्तानुमानस्याभासत्वेपि प्रकृते तदभावस्योक्तत्वेन न तत्तुल्यत्वमित्याहुः । यद्यप्यविद्यातत्कार्यान्यतरत्वरूपमिथ्यात्वं साध्यतया न विवक्षितं तथापि प्रसंगात्तल्लक्षणं तत्प्रमाणं च परेण दूषितमिति दूषणानां आभासत्वप्रदर्शनाय तदुभयं निरूप्यते । तत्र तावदनादिभावत्वे सति ज्ञानविलाप्यत्वं अज्ञानस्य लक्षणं । न चाकाशादावतिव्याप्तिः । तस्यानादित्वानभ्युपगमात् । महादिक्स्थानीयस्याव्याकृताकाशस्य च ब्रह्माविद्याव्यतिरिक्तत्वानभ्युपगमात् । अधिकंत्वन्यत्र । ज्ञानजन्यनाशप्रतियोगित्वाभावाच्च । यदि चाविद्याध्वंसो ज्ञानात्मक एवेत्युच्यते तदा ज्ञानात्मकध्वंसप्रतियोगित्वस्यैव प्रकृततल्लक्षणे निवेश्यतया नाकाशादावतिव्याप्तिः । ज्ञानप्रागभावेऽतिव्याप्तिवारणाय भावत्वनिवेशः । उत्तरोत्तरमनोवृत्तेः पूर्वपूर्वमनोवृत्तिध्वंसरूपताभ्युपगमे तादृशमनोवृत्तिषु अतिव्याप्तिवारणायानादित्वनिवेशः । प्रागभावध्वंसोपि प्रतियोगिजन्यः । एवं अविद्याध्वंसोपि ज्ञानातिरिक्तः ज्ञानजन्य इति मते व्यावृत्तिः स्फुटैव । चिदविद्यासंबंधेऽतिव्याप्तिवारणाय ज्ञान जन्येति । न चानादिभावस्य ज्ञाननिवर्त्यत्वानुपपत्तिः अभावस्येव भावस्यापि विनाशाविनाशयोः विरोधिसन्निपाततदभावप्रयुक्तत्वेन विपक्षे बाधकशून्यतयाऽनादिभावत्वस्याविनाशित्वव्याप्यत्वे मानाभावात् । [1] भ्रमोपादनत्वं वा तल्लक्षणं । यत्तु भ्रमशब्देन रजतादि-

---

[1] भ्रमोपादानमज्ञानमित्युक्तौ अन्तःकरणेऽतिव्याप्तिः । अतः भ्रमविषयोपादनत्वं ।

रूपोर्थो ज्ञानं वा नाद्यः पदार्थसत्त्वासत्त्वेन तदुपादानतायाः असंभवात् । न द्वितीयः अन्तःकरणेऽतिव्याप्तेरिति । तन्न भ्रमविषयस्यापारमार्थिकत्वेप्यनिर्वचनीयस्वरूपाभ्युपगमेन तदुपादानतासंभवात् । नाप्यन्तःकरणेतिव्याप्तिः । तस्य भ्रमोपादनत्वेपि भ्रमविषयं प्रत्यतथात्वात् । प्रमाणं च २ देवदत्तप्रमा देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तस्यानादेर्ध्वंसिका प्रमात्वात् यज्ञदत्तप्रमावदित्यनुमानं । तदुक्तं । देवदत्तप्रमा तत्प्रमाप्रागभावातिरेकिणोऽनादेर्ध्वंसिका प्रमात्वात् अविगीतप्रमा यथेति । नच घटोऽयमेद्घटप्रागभावातिरिक्तानादेर्निवर्तकः घटत्वात् घटान्तरवदित्याभाससाम्यं अनुकूलतर्कस्य वक्ष्यमाणत्वात् । ३ एतेन विगीतो भ्रमः एतज्जनकाबाध्यातिरिक्तोपादनकः भ्रमत्वात् संप्रतिपन्नवदित्यनुमानमपि व्याख्यातं । नचदेवदत्तप्रमा देवदत्तगतस्यप्रमाप्रागभावातिरिक्तस्यानादेर्निवर्तिकानभवति प्रमात्वात् संप्रतिपन्नवदित्यनेन सत्प्रतिपक्षितमिति वाच्यं विपक्षे बाधकाभावेन सत्प्रतिपक्षाभिमतस्य स्वसाध्यनिरूपितव्याप्त्यानिश्चयात् । यद्वा ४ विमतंप्रमाणज्ञानं स्वप्रागभावातिरिक्त स्वविषयावरणस्वनिवर्त्य स्वदेशगत वस्त्वन्तरपूर्वकं अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् इत्यनुमानं । नन्वेतदनुपपन्नं जडे अज्ञा-

---

२ देवदत्तप्रमा स्वप्रागभावातिरिक्तवस्तुनाशिका स्वं प्रमा स्वप्रागभावः प्रमाप्रागभावः तद्व्यतिरिक्तं अज्ञानं तन्नाशिका ।

३ विगीतः शुक्तिरजतभ्रमः स्वजनकाबाध्योपादानको भवति स्वं रजतभ्रमः स्वजनकं रजतसादृश्यज्ञानं तदबाध्यं शुक्त्यज्ञानं तदुपादानकः ।

४ विमतमिति । स्वं प्रमाणज्ञानं स्वप्रागभावातिरिक्तमज्ञानं एवं स्वविषयावरणं भवति । स्वं प्रमाणज्ञानं स्वविषयः घटः तस्यावरणमज्ञानं । आवरणं च विषयसंबद्धं सत्प्रकाशप्रतिबंधकं । स्वनिवर्त्यत्वं च स्वजन्यध्वंसप्रतियोगित्वं स्वं प्रमाणज्ञानं स्वजन्यः अज्ञानध्वंसः तत्प्रतियोगि अज्ञानं प्रतियो-

नानभ्युपगमात् हेतुमतामन्तःकरणवृत्तिलक्षणजडविषयकप्रमाणज्ञाना नां तथाविधवस्तुपूर्वकत्वरूपसाध्यशून्यत्वेनानेकान्तिकत्वादिति चेन्न। जडस्य प्रकाशप्रसक्त्यभावेनावरणकृत्यशून्यतया तदावरणानभ्युपगमेपि तदवच्छिन्नचितः प्रकाशप्रसक्त्या तस्यां ज्ञानविषयत्वानपायात्। प्रमामात्रस्य अधिष्ठानसद्विषयकत्वेन घटाद्यवच्छिन्नचैतन्ये अन्तःकरणवृत्तिलक्षणप्रमाणज्ञानविषयत्वानपायात्। नच स्वप्रागभावातिरिक्तेति विशेषणं व्यर्थं स्वनिवर्त्यत्वविशेषणेनैव तद्व्यावृत्तेः नहि भावः प्रागभावस्य निवर्तकः अपितु भावोत्पत्तिरेव। भावाभावयोः सहानवस्थानविरोधादिति वाच्यं। प्रागभावध्वंसस्य प्रतियोग्यात्मना तद्जन्यत्वेपि प्रतियोगिध्वंसात्मनः तज्जन्यतया उक्तविशेषणेन तद्व्यावृत्तेः प्रतियोगिवत् ध्वंसस्यापि प्रागभावध्वंसत्वात् अन्यथा प्रतियोगिध्वंसदशायामतीतः प्रागभाव इति व्यवहारानुपपत्तेः। अतीत्वं हि वर्तमानध्वंसप्रतियोगित्वं उक्तश्चायमर्थः प्रमाणविधिरपि प्रतियोग्येव प्रागभावनाश इतीति न क्षतिः। तन्मतेपि तन्मतन्यायेन ज्ञानमेवाज्ञाननाशइति वक्तव्यतया ९ स्वोत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपस्वनिवर्त्यत्वस्य निवेशनीयत्वात्। उक्तमतेपि न्यायस्य तेजस्तिमिरयोरपि तुल्यत्वात् दृष्टान्तस्य न साध्यविकलता। केचित् स्वात्मकध्वंसप्रतियोगित्वं स्वनिवर्त्यत्वं नच दृष्टान्तस्य साध्यविकलता। स्वनिवर्त्येत्यत्र स्वपदस्य स्व स्वीयान्यतरपरतया स्व स्वसामग्र्यन्यतरजन्यध्वंसप्रतियोगित्वस्य स्वात्मक स्वजन्यान्यतरध्वं-

---

गित्वमज्ञानस्य। स्वदेशगतत्वं च स्वाधिकरणवृत्तित्वं। वस्तु प्रमाणज्ञानं वस्त्वन्तरमज्ञानं स्वप्रागभावव्यतिरिक्तत्वानिवेशे ज्ञानप्रागभावमादाय सिद्धसाधनं। स्वनिवर्त्यत्वविशेषणेन ज्ञानप्रागभावस्य वारणं न संभवति। स्वं ज्ञानं स्वजन्यः ज्ञानप्रागभावध्वंसः कथमित्युक्तौ ज्ञानप्रागभावध्वंसस्य ज्ञाननाशानन्तरं ज्ञानध्वंसात्मकतया ज्ञानध्वंसं प्रति ज्ञानस्य कारणत्वात्।

९ स्वं प्रमाणज्ञानं स्वोत्पत्तिक्षणोत्पत्तिकध्वंसः अज्ञानध्वंसः स्वात्मकध्वंसः।

सप्रतियोगित्वपर्यवसितस्य विवक्षितत्वादित्याहुः। न चासत्य तथा विधवस्तुपूर्वकत्वसाधने सिद्धसाधनता। अनिर्वचनीयतथाविधवस्तुपूर्वकत्वे साध्ये साध्यविकलो दृष्टान्तः। अविशेषिततथाविधवस्तुपूर्वकत्वे साध्ये अप्रसिद्धविशेषणता प्रामाणिकाप्रामाणिकयोः साधारणधर्मस्याप्रामाणिकत्वात्। अनिर्वचनीयस्य केनाप्यप्रमितत्वात्। नहि शशविषाणगोविषाणयोः विषाणत्वसामान्यमस्तीति वाच्यं।

६ अविशेषिततथाविधवस्तुपूर्वकत्वस्य साध्यतायामदोषात्। घटनिष्ठात्यन्ताभावप्रतियोगितायाः सदसत्साधारण्येन प्रामाणिकाप्रामाणिकयोः साधारणधर्मस्यापि प्रामाणिकत्वात्। नच प्रतियोगिता न सामान्यमतो न दोष इति वाच्यं। स्वप्रागभावातिरिक्तत्व स्वनिवर्त्यत्वादेरपि प्रकृतसाध्यघटकविशेषणस्यासामान्यत्वात्। नच स्वप्रागभावव्यतिरिक्तत्वं स्वप्रागभावभेदः सच नास्त्यसतीति सिद्धांतइति वाच्यं। स्वप्रागभावात्मकत्वतद्भेदयोरन्यतरस्यासत्यावश्यकत्वात्। असत्त्वात्यन्ताभावप्रतियोगित्वादिवद्भेदस्यासद्वृत्तित्वे बाधकाभावाच्च। यत्तु ज्ञानप्रतिबंधकादृष्टदुरितस्य सिद्धतया सिद्धसाधनमिति तन्न तस्य ज्ञानानिवर्त्यत्वात्। नहि कार्योत्पत्त्यव्यवहितप्राक्क्षणे प्रतिबंधकसत्ता युज्यते। न ह्यव्यवहितप्राक्क्षणे तत्क्षणे वा सतस्तन्नाश्यत्वं तदात्मकनाशप्रतियोगित्वं वा। नच प्रागभावस्य स्वविषयावरणस्वाभावेनैव व्युदासाद् तद्वारकविशेषणान्तरोपादानं व्यर्थमिति वाच्यं।

---

स्वं प्रमाणज्ञानं स्वात्मकध्वंसः अज्ञानध्वंसः ज्ञानात्मकः स्वनिवर्त्यत्वंच स्वात्मकत्व स्वजन्यत्वान्यतरवद्ध्वंसप्रतियोगित्वं। स्वं प्रमाणज्ञानं।

६ वस्त्वन्तरपूर्वकं वस्त्वन्तरं पूर्वपक्षे ज्ञानप्रतिबंधकादृष्टमिति। सिद्धान्ते अज्ञानमिति।

७ स्वसजातीयनिरूपिताधिकरणताविशिष्टाधिकरणतानिरूपकान्य त्वरूपस्य प्रागभावसाधारणत्वात्। साजात्यं च स्वान्यूनाविषयकग्रहत्व प्रभात्वान्यतररूपेण। अधिकरणतावैशिष्ट्यं च स्वावच्छेदककाला वच्छिन्नस्वसामानाधिकरण्यसंबंधेन। अस्ति चैतादृशं स्वविषयावरण त्वं आद्यघटज्ञानप्रागभावे। तथाहि स्वं अयं घटइत्यादिप्रत्ययः तत्सजातीयं च तादृशप्रत्ययान्तरं तस्य याधिकरणता सा नैतज्ज्ञानप्रागभावाधिकरणतायां उक्तसंबंधेनास्ति एतत्प्रागभावस्य ज्ञानसजाती येन केनापि ज्ञानेन यौगपद्यानभ्युभवात्। अवच्छिन्नान्तावृत्तिव्याप्तिस्तु स्वयमूह्या। न चाद्यघटज्ञाने प्रागभावमादाय सिद्धसाधनता संभवति। नाप्यर्थान्तरता। अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्य त्वात्। इदंच घटत्वप्रकारकप्रमाणज्ञानत्वादिकं पक्षतावच्छेदकमिति पक्षे प्रकृतकथाप्रयोजिकां विप्रतिपत्तिं तद्व्यक्तित्वेनोपादाय। तस्याः पक्षतावच्छेदकत्वानुसरणे तु पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेपि न क्षतिः। परंतु तदा स्वविषयावरणत्वं न निवेश्यमिति ज्ञेयं। प्रमाणजनकादृष्टमादायार्थान्तरतावारणाय स्वविषयावरणत्व-

---

७ स्वविषयावरणमित्यस्य स्वसजातीयाधिकरणा वृत्तिरित्यर्थः। यथा प्रकाशाधिकरणावृत्तित्वं तमसः तथा ज्ञानाधिकरणावृत्तित्वं तमसः अज्ञानस्य अधिकरणतावैशिष्ट्यं च एकस्मिन्वस्तुनि एककाले अज्ञानाधिकरणता ज्ञानाधिकरणता नास्ति। अतः परस्परमनिरूपकत्वं। घटज्ञानप्रागभावस्य घटावरणत्वं संभवति। आवरणत्वं च स्वसजातीयत्वं स्वं घटज्ञानं स्वस्वजातीयमन्यत् घटज्ञानं स्वसजातीयनिरूपिताधिकरणता आत्मनिष्ठा तादृशाधिकरणता विशिष्टाधिकरणता अज्ञानाधिकरणता न भवति। किन्तु प्रमेयत्वाधिकरणता तदनिरूपकत्वमज्ञानस्य। ज्ञानप्रागभावाधिकरणता ज्ञानाधिकरणता न भवति। किन्तु प्रमेयत्वाधिकरणता तदनिरूपकत्वं अज्ञानस्य ज्ञान प्रागभावाधिकरणताज्ञानाधिकरणविशिष्टा न भवति। स्वं ज्ञानं चैत्रनिष्ठ

निवेशः। जनकादृष्टस्य चरमफलनिवर्तनीयतया नोक्तविधं स्वविषयावरणत्वं। तदधिकरणतायामुक्तसंबंधेनोक्तसजातीयाधिकरणतावैशिष्ट्यं न। नच तादृशादृष्टस्य चरमफलनिवर्त्यं। स्वोत्पत्तिक्षणोत्पत्तिकध्वंसीयप्रतियोगित्वरूपं स्वनिवर्त्यत्वमिति तु पक्षे न संभवतीतिवाच्यं। तादृशादृष्टस्यापि चरमफलनाश्यत्वोपगमात्। अन्यथाऽदृष्टसत्त्वे तदधीनफलान्तरापत्तेर्वारणाय प्रकारान्तरानुसरणे गौरवापत्तेः। प्रमाप्रतिबन्धकादृष्टमादायार्थान्तरवारणाय स्वनिवर्त्यत्वनिवेशः। विषयगताज्ञातत्वात्यन्ताभावमादायार्थान्तरवारणाय स्वदेशगतत्वं विशेषणं। नच तस्य स्वनिवर्त्यत्वाभावादेव तद्वारणं शक्यं। सामयिकात्यन्ताभाववादे विषयनिष्ठस्य तस्य ज्ञाननाश्यत्वानपायात्। तत्त्वमन्यत्र विवेचितं। वस्तुतस्तु स्वव्यधिकरणस्वाधिकरणक्षणोत्पत्तिकप्रमाप्रागभावमादायार्थान्तरवारणाय तत्। नच यथास्थिततादृशजन्यतानिवेशपक्षे स्वव्यधिकरणप्रागभावस्य स्वनिवर्त्यत्वाभावादेव वारणान्नेदं विशेषणमर्थवदिति वाच्यं। तद्ध्वंसस्यापि कालोपाधिकतया स्वजन्यत्वानपायात्। स्वप्रतिबन्धकादृष्टस्य स्वोत्पत्तेः प्राक् ध्वस्ततया ध्वंसे स्वोत्तरोत्पत्तिकत्वनियतस्वजन्यत्वासंभवात्। नच प्रागभावातिरिक्तत्वनिवेशेनैव स्वप्रागभावमादायार्थान्तरवारणसंभवात् प्रागभावे स्वीयत्वनिवेशोऽनर्थकः। तथाच नेदमप्यर्थान्तरमादाय तदावश्यकता। न चैवमपि स्वाधिकरणक्षणोत्पत्तिकध्वंसप्रतियोगिनं स्वसमानाधिकरणस्वपूर्ववृत्तिज्ञानेच्छादिकमादायार्थान्तरं दुर्वारमिति वाच्यं। वस्त्वन्तरपदेन स्वसमानाधिकरणजन्यज्ञानानधिकरणकालवृत्तित्वस्य यौगपद्यस्य कादाचित्कस्येष्टतया स्वजनकादृष्टचरमफलभूतज्ञाने तादृशमनःपरिणामानधिकरणकालवृत्तित्व-

---

घटज्ञानस्य मैत्रनिष्ठघटज्ञानप्रागभावपूर्वकत्वात् अर्थान्तरवारणाय स्वदेशगतत्वनिवेशः।

स्य वा विवक्षणीयत्वात् । न चैवमपि सिद्धान्ते चाक्षुषस्पर्शनादिरूपविजातीयज्ञानेच्छादियौगपद्यस्य कादाचित्कस्येष्टतया स्वजनकादृष्टचरमफलभूतज्ञानेच्छादिसमानकालोत्पत्तिके आद्ये घटज्ञाने तादृश ज्ञानजनकादृष्टपूर्वकत्वमादायार्थान्तरं दुर्वारमिति वाच्यं । स्वसमान कालोत्पत्तिकत्वसंबंधेन स्वसमानाधिकरणविशेषगुणविशिष्टान्यत्वस्यापि पक्षविशेषणतया विवक्षितत्वात् । संयोगद्वित्वादिकमादायार्थान्तरं च स्वदेशान्यदेशासंबंधित्वरूपस्वदेशगतत्वविवक्षयैव निरसनीयं । स्वव्याप्यतमोनिवर्तकप्रभायाः दृष्टान्तत्वसंभवाच्च न साध्य वैकल्यं । यद्यपि भूतलगतस्य तमसः प्रभासंबंधशून्यतत्क्षणविशेष विशिष्टतद्भूतलादिसंबद्धतया न कस्यापि तमसः प्रभाव्याप्यत्वं संभवति । तथापि स्वाधिकरणतादात्म्यवदन्यावृत्तित्वरूपव्याप्तिविवक्षायामदोषः । विशिष्टस्यातिरिक्ततापक्षे आद्यघटज्ञानप्राग्वर्तितत्क्षणादिविशिष्टान्तःकरणादिकमादायार्थान्तरं तु विशिष्टान्यत्वनिवेशेनैव निरसनीयं । नच विशिष्टत्वमनुगतमनतिप्रसक्तमेकं दुर्वचमिति वाच्यं । स्वाश्रयसमानाधिकरणाभावप्रतियोगित्वस्वाश्रयत्वै तदुभयसंबंधेन सादिधर्मविशिष्टत्वस्यैव प्रकृते विशिष्टशब्देन विवक्षणीयत्वात् । विस्तरस्तु प्रभायामनुसंधेयः ॥

अप्रकाशितार्थप्रकाशकत्वं च स्वसमानाधिकरण १ स्वान्यूनविषयक २ संशयान्यसविषयका ३ व्यवहितोत्तरत्वशून्यप्रमा त-

---

१ स्वान्यूनविषयकत्वं च स्वविषयताव्यापकविषयतानिरूपकत्वं विषयिता संबंधघटितव्याप्यव्यापकभावो वा ।

२ संशयान्यत्वं च विषयताविशिष्टविषयतानिरूपकत्वं । वैशिष्ट्यं च स्वनिरूपकनिरूपितत्वस्वनिरूपितविरोधविषयतानिरूपितत्वोभयसंबंधेन । संशये कोटिद्वयस्य विरोधमानस्वीकारात् एककोटिनिष्ठविषयतानिरूपितविरोधनिष्ठ विषयतानिरूपितत्वं अपरकोटिनिष्ठविषयतायाः । वन्ह्यभावविरुद्धवह्निप्रति योगिकसंयोगसंबंधेन पर्वतो वह्निमान्न वा इत्याकारकः संशयो बोध्यः ।

त्वभान्यतरत्वं। अन्यतरत्वंच ४ एकभेदविशिष्टापरभेदात्यन्ताभावा-द्यतिरिक्ता ५ खण्डाभावरूपं। तेन तादृशप्रमात्वप्रभात्वादीनामुक्ता-त्यन्ताभावत्वरूपहेतुतावच्छेदकघटकत्वेपि नवैयर्थ्यं। स्वनिरूपकाभा-वप्रतियोग्यधिकरणतासमानाधिकरणाधिकरणता निरूपकत्वविशि-ष्टत्वस्य हेतुविशेषणत्वादुक्तप्रमाभेदविशिष्टतत्प्रभाभेदवद्वृत्तेः तदर्थत्वेन वा विवक्षितत्वात्। ६ सिद्धान्ते अत्यन्ताभावमात्रस्य केवलान्वयि-त्वेपि न व्यभिचारः। केचित्त्वप्रकाशितार्थप्रकाशकत्वं स्वसमानाधि-करण स्वान्यूनविषयक ७ प्रमाणज्ञाननिरूपिताधिकरणताविशिष्टा-न्यायाऽधिकरणता स्वाव्यवहितोत्तरत्व स्वसामानाधिकरण्यै तदुभय-संबंधेन तादृशाधिकरणताविशिष्टप्रमा तत्प्रभान्यतरत्वं। प्रतियो-ग्यधिकरणतावैशिष्ट्यं च। स्वाधिकरणक्षणावच्छिन्नस्वसामानाधिक-रण्येनेत्याहुः। एतेन हेतुशरीरप्रविष्टं प्रकाशकत्वं तज्जनकत्वं वा व्याप-कत्वं वा व्याप्यत्वं वा नाद्यः चक्षुरादौ व्यभिचारात् दृष्टान्तस्य साधनविकलत्वाच्च। ज्ञाने ज्ञानकारणत्वाभावेनासिद्धेश्च। न द्वितीयः असिद्धेरज्ञानादौ व्यभिचाराच्च। न तृतीयः। साधनविकलत्वात्

३ अव्यवहितोत्तरत्वं च स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्व-ध्वंसाधिकरणत्वं। उत्तरभाविनां सर्वेषां क्षणानां अव्यवहितत्ववारणाय सत्यंतं। पूर्वक्षणस्यापि अव्यवहितोत्तरत्ववारणाय विशेष्यं। तत्र सत्यंतं अव्यवहितत्वरूपं। विशेष्यमुत्तरत्वरूपं।

४ एकभेदविशिष्टापरभेदेत्यत्र वैशिष्ट्यं स्वाधिकरणवृत्तित्वरूपसामानाधिक-रण्यसंबंधेन। स्वाधिकरणवृत्तिता च स्वरूपसंबंधेन।

५ अखण्डाभावेत्यत्र अखण्डत्वं च इतरनिरूपणानधीननिरूपणविषयत्वं इतरपदार्थाघटितस्वशरीरकत्वं वा।

६ सिद्धान्तो नाम प्रामाणिकत्वेन पूर्वाचार्यांगीकृतप्रमेयं।

७ प्रमाणज्ञानं अन्तःकरणवृत्तिरूपं ज्ञानं।

दृष्टान्तस्येति निरस्तं। अज्ञानानभ्युपगमे अहमज्ञो मामन्यं च नजानामीति प्रत्ययानुपपत्तिः। न चाहमज्ञइत्यादिप्रतीतौ ज्ञानाभावादिविषयकत्वं व्याघातात्। नहि प्रतियोग्यधिकरणे प्रतियोग्यधिकरणक्षणावच्छेदेन तदत्यन्ताभावस्तवाभिमतः। धर्मिप्रतियोगिनोः साक्षिग्राह्यत्वाभ्युपगमेपि साक्षिरूपज्ञानेनैव व्याघातो दुर्वारः। किं बहुना न जानामीत्यभावग्रहेणैव स्वकाले स्वाभावावगाहनात् व्याघातो दुर्वारः। अज्ञानस्य स्वरूपतः साक्षिगम्यत्वेपि उक्तविशेषणविशिष्टस्य प्रमाण गम्यत्वात् न तत्रानुमानोपन्यासासंगतिः। त्वदुक्तमर्थं न जानामीति प्रत्यक्षानुपपत्तेश्चेति। ननु किमत्र सर्वानुवादेन व्यवहारः किं वा सामान्यतः। नाद्यः तादृशव्यवहारस्यैवाभावात्। भावे वा त्वदुक्तं न प्रमाणतो जानामीत्येवं परत्वोपपत्तेः। प्रतिवादिवाक्यात् आधिगतार्थानुवादपुरस्सरं प्रमाणाभावेन निरसनदर्शनात्। नच त्वदुक्तार्थे प्रमाणज्ञानमेव नास्तीत्यस्य विशिष्टं विषय इत्ययुक्तं। एतत्प्रमाण ज्ञानस्य प्रमाणाभावविषयकत्वेपि तदर्थस्याताद्विषयत्वात्। अन्यथा भ्रमो मम नास्तीत्यादिप्रमाणज्ञानस्यापि विशिष्टार्थभ्रमविषयतया भ्रमविषयस्यापि प्रामाणिकत्वापातात्। न द्वितीयः। सामान्यानुवादेन विशेषव्यवहारोपपत्तेः विशेषस्याधिगमानधिगमयोः नैवं व्यवहारइति चेन्न। अस्ति कश्चिद्विशेष इति सामान्यतो ज्ञातत्वात्। किंच भावरूपाज्ञानाविद्याभ्युपगमेपि किं पूर्वमर्थोज्ञातो नवेति सर्वथापि प्रश्नायोगः। नन्वस्माकं मते सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यविषय एवेति प्रमाणज्ञानोदयात् प्रागज्ञातत्वविशेषितोर्थः साक्षिसिद्धः अनुवादगोचरो भवति प्रश्नार्ह इति चेन्न। साक्षितः सिद्धतयापि सिद्धिर्व्यवहारायोगाच्च। साक्षिणा ज्ञातेपि प्रमाणभुगित्यादिव्यवहार इति चेन्न। साक्षिसिद्धत्वे प्रमाणभू इत्यादेर्निष्फलत्वात्। तथाच त्वयापि सामान्यतो न जानामीति साक्षिसिद्धोर्थो विशेषज्ञानायानूद्य निरूपणविषय इति चेन्मैवं। तदुक्तार्थे-

त्वेनानुवादेपि व्याघातस्यानिस्तारात् । त्वदुक्तार्थं हि न जानामीत्यत्र त्वदुक्तार्थविषयकज्ञानसामान्याभावः प्रत्येतव्यः । प्रतियोग्यंशे सामान्यधर्मस्यैव पक्षविशेषणत्वात् । प्रतियोगिविशेषणतानापन्नस्यापि धर्मस्याभावप्रतीतौ प्रतियोगितावच्छेदकत्वेन संसर्गघटकतया भानोपगमे घटवत्यपि भूतले घटो नास्तीति प्रतीतिप्रसंगात् । अत एव तादृशप्रतीतेः प्रमाणाभावविषयकत्वं नाभ्युपगन्तुं युक्तं । किंच त्वदुक्तार्थविषयकप्रमाणज्ञानं नास्तीति ज्ञानस्यापि प्रमाणज्ञानतया त्वदुक्तार्थविषयकप्रमाणज्ञानसामान्याभावविषयकत्वेपि व्याघातो दुर्वारः । यत्तु एतत्प्रमाणज्ञानस्य प्रमाणाभावविषयकत्वेपि तद्विषयस्यैव तद्विषयता नास्तीति । तन्न । ८ प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यनवगाहिनः अभावप्रत्यक्षस्याप्रामाणिकत्वात् । नच त्वदुक्तार्थत्वावान्तरधर्मप्रकारकज्ञानाभावो विषयः नात उक्तदोष इति वाच्यं । त्वदुक्तार्थत्वव्याप्यवानिति सामान्यतो विशेषधर्मज्ञानवतामपि तादृशव्यवहारदर्शनात् । नच त्वदुक्तार्थत्वव्याप्यधर्मनिष्ठनिरवच्छिन्नप्रकारताशालिज्ञानाभावः तत्र विषय इति युक्तं । तथासति परोपन्यस्तमर्थं कंबुग्रीवादिमत्त्वाद्युपाधिपरत्वाकारेण जानतामपि तादृश व्यवहारापत्तेः न त्वदुक्तार्थत्वव्याप्यतावच्छिन्नत्वदुक्तार्थनिष्ठविषयताशालिज्ञानाभावस्तत्र विषय इति युक्तं । ९ त्वदुक्तार्थत्वमुभयावृत्ति धर्मत्वादित्यादिप्रत्ययवतामपि तादृशव्यवहारदर्शनात् । मन्मते तु ज्ञानविशेष एव ज्ञानविरोधीति न दोषः । किंचेत्यादिकमपि न युक्तं । अज्ञातत्वेन साक्षिसिद्धेपि वस्तुन्यज्ञाननिवर्तकज्ञानसंपत्तये प्रमाणबुभुत्सायाः सफलत्वात् । अधिकं त्वखण्डार्थविचारे द्रष्टव्यं । तदेवं स्वतः प्रमाणतश्चाविद्यायाः सुवचत्वेपि न तत्प्रयो

८ अभावबुद्धिः विशिष्टवैशिष्ट्यमर्यादां नातिशेते इति न्यायादिति भावः।
९ उभयावृत्तित्वं च भेदविशिष्टान्यत्वं । वैशिष्ट्यं च स्वप्रतियोगिवृत्तित्व स्वानुयोगिवृत्तित्वोभयसंबन्धेन ।

ज्यान्यतरत्वं साध्यं। तादृशान्यतरत्वस्य परैरपारमार्थिकज्ञाने तत्प्रयोज्यभ्रमेपि स्वीकारेण सिद्धसाधनादिप्रसंगात्। इति मिथ्यात्वनिरुक्तिः। १ ननु हेतूक्तं दृश्यत्वं किं दृग्विषयत्वं अस्वप्रकाशत्वं वा आद्येपि दृग्वृत्तिरूपावा चिद्रूपावा नाद्यः। आत्मन्यनेकान्तिकत्वात्। तस्यापि वेदान्तजन्यवृत्तिविषयत्वात्। वृत्तिजनितफलासंबन्धात् नानैकान्तिकमिति चेन्न। फलं किं ज्ञातता व्यवहारो वा। आद्ये घटादावपि तदभावादसिद्धिस्स्यात्। अतीतानागतनित्यानुमेयेपु ज्ञाततायाअभावेन भागासिद्धिश्च। ज्ञातताभावश्च अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं स्वप्रकाशत्वमिति तल्लक्षणमभिदधता चित्सुखेन अपरोक्षव्यवहारयोग्यताविशेषणकृत्याभिधानप्रस्तावेऽभिहितः। नचावेद्यत्वमेतावदेव लक्षणमस्त्विति वाच्यं। २ तथासत्यती-

१ दृश्यत्वविचारः ॥ दृश्यत्वं दृश्यपदप्रवृत्तिनिमित्तं मिथ्यात्वसाधकत्वेनोपन्यस्तं। वृत्तिव्याप्यत्वं। मनःपरिणामरूपायाः धीमात्रनिर्देशेपि विशेष्यविशेषणाकारवृत्तिद्वयावच्छिन्न चित्यपि धीव्यवहारात्। फलव्याप्यत्वं स्वाकारवृत्तिप्रतिबिम्बितचितो भग्नावरणचितश्च तादात्म्यं ॥ कथंचिच्चिद्विषयत्वं किंचित्कालावच्छिन्नमावृतानावृतसाधारणं। नच धर्मिज्ञानेन भग्नावरणकस्य शुक्त्याद्यवच्छिन्नचैतन्यस्य शुक्तिरूप्यादिकमपि विषय इति वाच्यं। स्वावच्छिन्नस्याज्ञानविषयत्वस्य भग्नविशिष्टचिद्विषयत्वमेव हि फलव्याप्यत्वशब्दार्थः। अन्यथा गुरुत्वादावपि तदापत्तेः ॥ फलपदस्य प्रमाफलार्थकत्वात् ईश्वरीयमायावृत्तेश्च प्रमात्वाभावेन तत्प्रतिबिम्बितचितः फलपदार्थत्वाभावात्। येन हि पुरुषेण यदज्ञातं तद्विषयकवृत्तिः तत्पुरुषीयप्रमा। नच ईश्वरेण किञ्चिदज्ञातमस्ति येन तदीयमायावृत्तिः प्रमा स्यात् यदिच फलशब्दार्थमपहाय ईश्वरीयवृत्तिसाधारणहेतुरुच्यते तदा नासिद्ध्यादिदोषः ॥ ज्ञातं वृत्त्युपहितचिद्विषयः ॥

२ अतीतत्वं च विद्यमानध्वंसप्रतियोगित्वं। अनागतत्वं च वर्तमानप्रागभावप्रतियोगित्वं ॥

तानागतनित्यानुमेयेषु अतिव्याप्तिः। फलव्याप्यतालक्षणवेद्यत्वस्य तत्राभावादिति। द्वितीये पुनरनैकान्त्यमेव। आत्मनोपि वृत्तिजन्यव्यवहारविषयत्वात्। चिद्रूपदृग्विषयत्वं तु घटादावस्मदादिभिर्नाङ्गीक्रियत इति भागासिद्धिः। द्वितीये स्वप्रकाशत्वमवेद्यत्वं तदभावो दृश्यत्वमिति चेत् वेद्यत्वं दृश्यत्वमित्युक्तं स्यात्। तथाच प्रागुक्तदोषापातः। १ स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वप्रकाशत्वं तदभावो दृश्यत्व मिति चेत् तर्ह्यात्मनोऽद्वितीयत्वादिव्यवहारे संविदन्तरापेक्षासत्त्वात् व्यभिचारः। निर्विकल्पके स्वव्यवहारे संविदन्तरानपेक्षाऽस्तीति चेत् तर्हि घटेपि तथैवेत्यसिद्धिः। घटनिर्विकल्पकव्यवहार एव नास्तीति चेदात्मन्यपि स नास्तीत्येवेति चेन्न। तस्य निर्विकल्पत्वे विवादात्। अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं स्वप्रकाशत्वमिति चेन्न। व्याहतत्वेनासंभावितत्वात् कथंचिदव्याहतत्वेपि विशेषणाभावेन तद्विशेष्याभावेन उतोभयाभावेन दृश्यत्वं वक्तव्यं। तत्रावेद्यत्वाभावो वेद्यत्वमेव हेतुरस्तु किं विशेष्येण तस्यचोक्तं दूषणं। द्वितीये स्वरूपासिद्धिः। तृतीये व्यर्थविशेष्यत्वं विशेषणासिद्धिश्च। किंच दृश्यत्वं प्रामणतो भ्रान्त्या वा नोभयमपि अन्यतरासिद्धेः। ननु सामान्यतः प्रयुक्तहेतोर्विशेषविकल्पेन निराकरणे सर्वानुमानभङ्गः। तथाहि। धूमात् धूमध्वजसाधने किमेतद्देकालसंलग्नो धूमो हेतुः किंवा अनेतद्देशकालसंलग्न इति विकल्प्य आद्ये साध्यशून्यं निदर्शनं। द्वितीयेऽसिद्धिरिति दूषणसंभवादिति। मैवं। तत्र धूममात्रस्य पर्वतीयाग्नेः साधनत्वेनादूषणत्वाभ्युपगमात् धूमत्वस्य साधनत्वेन न विकल्पावकाशः। तर्हि किंवक्रो धूमो हेतुरिति विकल्पेन दूषणप्रसंग इति चेन्न। तस्य सामा-

१ स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिर्नाम व्यक्तिविशिष्टत्वं। वैशिष्ट्यंच तादात्म्य स्वव्यापकत्वोभयसंबंधेन। व्याप्यताघटकसंबंधः स्वविषयकव्यवहारत्वं। व्यापकताघटकसंबन्धः स्वभिन्नसंविदधीनत्वं॥

न्येनैव हेतुत्वात्। नचास्तु तथाप्रकृतेपीति वाच्यं। प्रमाणभ्रान्तिदृश्ययोर्दृश्यत्वसामान्याभावात्। नहि जलजगगननलिनयोर्नलिनत्वमस्ति। तर्हि कथं भ्रान्तिदृश्यत्वमिति चेन्न। यथा नभोनलिन मित्युच्यते तथैवेत्यवेहि। दृश्यत्वस्य सन्मात्रवृत्तित्वाद्विरुद्धत्वाच्च। ननु रजतं दृश्यत इति चेन्न। तत्र शुक्तिकाया एव दृश्यत्वात्। ननु रजतसंविदः कथं शुक्तिका विषयः विरोधादिति चेन्न। रजत संविदिति कोर्थः। किं रजतविषया इति रजतत्वोल्लेखसंविदिति वा नाद्यः। अनभ्युपगमात्। द्वितीये को विरोधः। स्वविषयशुक्तिकामेवान्याकारेण गृह्णातीत्यस्याविरुद्धत्वात्। ननु तर्हि रजते असति कथं दृश्यतेति चेन्न। तस्य दृश्यत्वाभासत्वात् तादृशस्य पक्षेऽनन्वयात्। किंच रजतस्य फलव्याप्यतया वृत्तिव्याप्यतया वा दृश्य त्वं। नोभयथापि असतएव तत्सिद्ध्यभ्युपगमात्। असति सन्निकर्षाभावात्। आत्मनोपि दृश्यत्वादनैकान्तिकता च। न चात्मा दृश्य इति चेत् न। व्याहतेः। नह्यज्ञाते धर्मिणि धर्मविधानं निषेधो वा युज्यते। आत्मा दृश्यो वस्तुत्वात् घटवत्। अयं घटः एतद्घटान्यान्यः प्रमेयत्वात् घटवदिति च दृश्यत्वसिद्धेः। किंच दृश्यत्वाभावे तदविद्यानिवृत्तेरभावेन मोक्षाभावप्रसंगः। नच त्वत्पक्षे ब्रह्मज्ञानं नाम यत्किंचित्स्यात्। पदार्थस्य विषयितानतिरेकात्। यदि श्रुतमयेन ज्ञानेन तत्त्वमभिधाय चिन्तामयीमवस्थामवलंब्य मनस्यन्तःकरणपरिणामवृत्तिरूपं ज्ञानमुपजायते। तेन भवेदविद्यानिवृत्तिरिति चेन्न। तथाभ्युपगमे परमात्मनोपि दृश्यतया व्यभिचारानिस्तारात्। आत्मनो वृत्तिव्याप्यत्वेपि फलव्याप्यताया अभावान्न दृश्यत्वमिति चेन्न। दत्तोत्तरत्वात्। विषयत्वाभावे स्यात्माकारज्ञानमात्मज्ञानं। तेन भवेदविद्यानिवृत्तिरिति चेन्न। विचारागोचरत्वात्। तथा हि। आत्माकारमित्यस्य कोर्थः। आत्माकार एवाकारो यस्येति वा आत्माकार इवाकारो यस्येति वा आत्मैवाकारो यस्येति वा

नाद्यः ज्ञानज्ञेययोरेकाकारायोगात् । सत्तया एकाकारोस्तीति चेन्न । अनुगतसत्ताया अनंगीकारात् । सत्तयाएकाकारत्वे च वेदान्ताज्जायमानं ज्ञानमात्माकारमेव कुतः । घटाकारमपि किं नस्यात् । नापि परेण सत्तानामात्मन्याकारोङ्गीक्रियते । निराकारत्वाङ्गीकारात् । न द्वितीयः । अत्यन्तसादृश्यानुपलम्भात् । किंचित्सादृश्यस्य प्रागिवातिप्रसंजकत्वात् । तृतीयपक्षेपि आत्मा ज्ञानस्याकारो न संभवति । आधाराधेयभावस्यासंभवात् । अतः परिशेषाद्विषयतया व्यावर्तकत्वेनात्मा ज्ञानस्याकार इति वक्तव्यं । तदपि विषयत्वमिति यत्किञ्चिदेतत् । भवेदिदं यदि दृग्विषयत्वं दृश्यत्वं । मैवं । किन्तु स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिः । कथमेतादृशी दृश्यता कथितदूषणग्रस्ता स्यात् । मैवं । अतिरिक्तपदेन पारमार्थिकभेदवत्त्वं वा व्यावहारिकभेदवत्त्वं वा विवक्षितं । नाद्यस्तवासिद्धेः । न द्वितीयः । ममासिद्धेः । सामान्यतः प्रयोग इति तु प्रागेव निरस्तं । संविदपेक्षानियतित्वमात्रस्य हेतुत्वोपपत्तेः व्यर्थविशेषणत्वं च । न चासति रजतेपि ज्ञानापेक्षा व्यवहाराय तस्या ध्यस्ततयैव सिद्ध्युपगमादित्यवादिपं । अत्यन्तासत्यनेकान्त्यं च । नच तदापि मिथ्येति वाच्यं । तथासति रजतादेरसद्विलक्षणत्वप्रतिपादनप्रयासवैयर्थ्यापातात् । न चाबाध्यत्वमसतो युज्यते । प्रतीत्यंगीकारात् । नापि तस्यानिर्वचनीयत्वं प्रमाणाभावादिति चेदत्र ब्रूमः सप्रकारकवृत्तिविषयत्वं दृश्यत्वं । किंचित्प्रकारकज्ञाने तद्विशिष्टस्य विषयत्वेपि शुद्धस्याविषयत्वात् शुद्धे ब्रह्मणि न व्यभिचारः । ४ अविद्यानिवर्तकनिर्विकल्पकवृत्तिविषयत्वाच्च न विचारवैयर्थ्यं । यद्वा चिद्विषयत्वं दृश्यत्वं । नच घटादावसिद्धिः । दृश्यमात्रस्य ईशादिज्ञानविषयत्वाभ्युपगमात् । नचैवं शुद्धब्रह्मणि

४ निर्विकल्पकवृत्तिविषयत्वमित्यत्र विकल्पः प्रकारः । तेन विषयत्वेक्तिर्न व्याहता ॥

व्यभिचारः। तस्यापि ईशज्ञेयत्वाभ्युपगमादिति वाच्यं। सत्त्वप्रकारकचिद्विषयत्वाभ्युपगमात्। अस्य विवक्षितत्वात्। मन्मते निर्विशेषब्रह्मणः सत्त्वानभ्युपगमेन ताद्रूप्येण भानासंभवात्। सत्ताप्रकारकास्मदादिबुद्धौ चोपहितस्यैव भानाभ्युपगमात्। सत्ता च कालसंबन्धः। शुद्धस्यापि सप्रकारकधीविषयत्वमिति मते तु स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वरूपस्य स्वप्रकाशत्वस्याभावो दृश्यत्वं। स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं च व्यवहारपदस्य व्यवहृतिसाधनीभूतासंदिग्धतापरत्वात् संविदन्तराप्रयोज्यसंशयविषयत्वाभावरूपं पर्यवस्यति। तच्च चित्यव्याहतं। चिदस्ति नवेति संशयस्य कदाप्यभावेन तन्निष्ठविषयत्वाभावाधिकरणतायाः संविदन्तराप्रयोज्यत्वात्। तथाच नात्मनि व्यभिचारः। इदमेव चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वं। अवेद्यत्वमित्यनेन हि संविदन्तराविषयत्वमुच्यते। अपरोक्षव्यवहारयोग्यता चासंदिग्धत्वमिति। नच संदेहविषयत्वसामान्याभावोपि चित्यसिद्धः। अपरिच्छिन्नाभावमानायां चिति सत्तासंशयस्य संभवादिति वाच्यं। चित्त्वातिरिक्तचिद्वृत्तिधर्मावच्छिन्नासत्त्वप्रकारकसंशयाविषयत्वसामान्याभावस्य विवक्षितत्वात्। तथाच चित्त्वातिरिक्तचिद्वृत्तिधर्मानवच्छिन्नासत्त्वकोटिकसंशयविषयत्वं दृश्यत्वमिति पर्यवसितोऽर्थः। यद्वा स्वविशेष्यविषयकज्ञानाबाध्यदृग्विशेष्यत्वरूपं तद्विवक्षितमतो न कोपि दोषः। प्रमाभ्रमसाधारणधीत्वेनैव दृशो निवेशान्नान्यतरासिद्धिः। यत्तु न सदसत्साधारणं दृश्यत्वं संभवति। अनेकशशविषाणगोविषाणसाधारणविषाणत्वाभावादिति। तन्न। एतदनुमानात्प्रागनिर्वचनीयासिद्धेः। तत्सिद्धौ वा सदनिर्वाच्यसाधारणं सामान्यमभ्युपेयमिति प्रागुपपादितत्वात्। यत्तु भ्रमे मिथ्यारजतस्य विषयता नास्तीत्युक्त्वा विरोधोपपादनं तद्धेयं। असत्ख्यातिप्रसङ्गात्। अन्याकारमसंतं गृह्णतो ज्ञानस्य तद्विषयत्वायोगात्। रज-

तन्निष्ठदृश्यत्वमाभास इति चेन्न। केयमाभासता। यद्यलीकता तर्हि दृश्यता नास्तीति पर्यवसितं। तत्र दर्शितो दण्डः। यदि चामुख्यता तदानीं करणसन्निकर्षरूपाया इव विषयताया मुख्यतेत्युच्यते। तथाप्याकारतारूपगौणविषयताया एव हेतुत्वानुसरणान्नदोषः। वस्तुतस्तु उक्तसन्निकर्षस्य न विषयतारूपत्वमित्यप्यन्यत्र प्रपंचितं। शुक्तिरजतादौ चाविद्यावृत्तिविषयत्वस्य नव्यमते चाक्षुषादिवृत्तिविषयताया अनावृतसाक्षिरूपचिद्रूपवेद्यतायाश्चोपगमान्न साधनविकलो दृष्टान्तः। शुक्तिरूप्यादेरनिर्वाच्यस्योत्पत्तिक्षणोत्पन्नाविद्यावृत्त्योपहितानावृतचिद्भास्यताया अद्वैतविद्याविद्योते सम्यगुपपादितत्वाच्च नापसिद्धान्तः। द्वितीयादिक्षणे च तत्रेन्द्रियसन्निकर्षस्यापि संभवात्। तृतीयादिक्षणे तस्य चाक्षुषादिवृत्तिवेद्यतापि सुलभा। न चात्यन्तासिद्धिः तत्र सद्विलक्षणत्वादिसाध्यास्याप्रत्यूहत्वाच्च। कालसंबन्धित्वस्यापि हेतौ निवेशनीयत्वाद्वा। यत्त्वत्यन्तासतः प्रतीतिर्नोपेयत इति तत्तथैवेत्यन्यत्रोपपादितमिति संक्षेपः। एवं जडत्वमपि हेतुस्संभवति। ननु किमिदं जडत्वं ज्ञानानाधारत्वमनात्मत्वं वा। अज्ञानरूपत्वमस्वप्रकाशत्वं वा। नाद्यः। विशिष्टात्मनि पक्षनिक्षिप्ते असिद्धत्वात्। अलीके अनैकान्त्याच्च। न द्वितीयः। अनात्मेत्यात्मातिरिक्तत्वं विवक्षितं आत्मत्वानाधारत्वं वा। नाद्यः। तत्रासिद्धेः। नहि त्वत्पक्षे परमात्मनो जगदतिरिक्तमस्ति। परमार्थतः तदभावेप्यनाद्यविद्याविहितो भेदोस्तीति चेन्न। तर्ह्यस्माकमसिद्धो हेतुः। असति व्यभिचारश्च। न द्वितीयः। आत्मत्वस्य प्रागुक्तरीत्या निर्वचनासंभवात्। मन्मते हि आत्मत्वजातिमत्त्वं ज्ञानाश्रयत्वं वा तदिति शक्यमभ्युपगन्तुं। न तृतीयः। वृत्तिज्ञानेऽसिद्धेः। आत्मनो ज्ञानस्वरूपत्वे विषयोऽनिर्वाच्यः। निर्विषयस्यासंभवात्। एतेनाचेतनत्वमिति निरस्तं उक्तपक्षाबहिर्भावादिति चेन्मैवं। ध्वंसप्रतियोगित्वे सति ज्ञानाधारत्वमात्मत्वं। तद्भिन्नत्वं च जडत्वं। सत्यन्तनिवेशाच्च

न विशिष्टात्मन्यसिद्धिः। शुद्धस्यापि ज्ञातृत्वाभ्युपगमाच्च न तत्र व्यभिचारः। व्यभिचारस्तु प्रागुक्तरीत्या निरसनीयः। यथासन्निवेशे न वैयर्थ्यं। शुक्तिरजतादेर्नाशो नास्तीति पक्षे वा विशेष्यांशोऽर्थवानिति बोध्यं। पञ्चमप्रकारे वा स्वरूपासिद्धिवारणाय सः। मोक्षदशाया मात्मनो निर्विषयत्वेन न ज्ञानत्वहानिः। यदा यज्ज्ञानं तदा तद्विषय इति नियमस्यातीतपक्षसाध्यकानुमितौ व्यभिचारात्। न च तादृशानुमितिदशायां तद्विषयस्य वह्न्यादेः असत्त्वेपि वह्नित्वादेः तथाविधस्य सत्त्वान्न व्यभिचार इति वाच्यं। त्वन्मते वह्नित्वादेरपि वह्न्यादिसमानयोगक्षेमत्वात्। नच यदा यदपरोक्षज्ञानं तदा तद्विषय इति नियमः प्रामाणिकः। विनश्यदवस्थापन्नघटाद्यपरोक्षे व्यभिचारात्। विषयतायाउपलक्षणतामात्रेण तदाश्रयस्य ज्ञानत्वसंभवेन नसा स्वाश्रयव्यापिका एवंच ज्ञानान्यत्वं जडत्वमित्यपि वक्तुं शक्यं। नच वृत्तिज्ञानेऽसिद्धिः। ज्ञानत्वजातेरात्मवृत्त्युभयसाधारणत्वादिति वाच्यं। प्रागभवाप्रतियोगित्वे ध्वंसाप्रतियोगित्वे वा सति तादृशनित्यत्वाश्रयज्ञानत्वावच्छिन्नभेदरूपस्यैव तस्य विवक्षितत्वात्। नच पारमार्थिकभेदस्य हेतुत्वे इतरासिद्धिः। आविद्यकस्य तथात्वे भागासिद्धिरिति वाच्यं। पारमार्थिकत्वाद्यविशेषितस्यैव भेदस्य हेतुत्वोपगमान्नान्यतरासिद्धिः। अन्यत् प्रागेवोक्तं। अस्वप्रकाशत्वं वा तत्। विवेचितं चैतत्। एवं परिच्छिन्नत्वं देशतः कालतः वस्तुतो वा स्यात्। नाद्यः कालाकाशादिषु भागासिद्धेः। अतएव न द्वितीयः। ब्रह्मव्यतिरिक्तं सकलमपि देशकालाभ्यां परिच्छिन्नमिति चेन्न। व्याघातात्। तथाहि। देशतः परिच्छिन्नत्वं नाम किंचिद्देशनिष्ठाभावप्रतियोगित्वं। त्वया सर्वाभावं प्रतिजानता किञ्चिदधिष्ठानमभ्युपेयं। अभावस्याधिष्ठानभेदाधीनबोधत्वात्। ननु कथं व्याघातः। सकलमपि ब्रह्मण्यध्यस्तमतः तत्र नास्तीति निषेधात् नाधिष्ठानाभ्युपगत्या व्याघात

4

इति चेन्न । तर्हि परिच्छिन्नत्वं नाम बाध्यतेत्यर्थस्स्यात् । तथा साध्याविशिष्टतयैव दुष्टतापत्तिः । कालपरिच्छेदे चानित्यता स्यादिति त्रिकालासत्यतानाभिप्रेता भवेत् । तथाच कालस्यैव तादृशपरिच्छेदायोगे न गतो व्याघातः । कुतश्चाकाशादेः कालपरिच्छेदाध्यवसायः । जडत्वहेतुनेति चेन्न । तस्याव्याकृतत्वात् । घटादौ कार्यतामयुक्तत्वाच्च परिच्छिन्नत्वस्य । यज्ज्ञेयं तत्कार्यमिति चेन्न । अविद्यायां व्यभिचारात् अनादित्वपरिभाषा लुप्येत । तत्कारणस्याभावाच्च । पञ्चमप्रकारं मोक्षमाचक्षाणस्य जडत्वहेतोर्नित्यतयाऽभ्युपगते मोक्षे व्यभिचारः । तस्य कालपरिच्छिन्नत्वनियमे संसारपुनरावृत्तिप्रसंगः । नहि सहस्राक्षोपि क्षयं क्षेप्तुं क्षम इत्युन्मत्तवादश्च । द्वितीयः । नेति नेतीत्यादिना ब्रह्मण्यपि जगदन्योन्याभावस्य श्रुतत्वात् सोपि भेदोऽविद्याविलसित इति चेत् किमिदानीं पदार्थभेदं न भिन्नत्व हेतुः तथासति पक्षे तदसिद्धिस्स्यात् । विरुद्धता च स्यात् इति चेन्मैवं । किंचिद्देशनिष्ठात्यन्ताभावप्रतियोगित्वमेव तत् नच कालादिषु भागासिद्धिः । कालादीनामपि नित्यत्वानभ्युपगमात् । गवादिनित्यता च न यत्किञ्चिद्देशनिष्ठात्यन्ताभावप्रतियोगित्वविरोधिनी । दिङ्निरूपितविशेषणताया अतिरिक्ताया अभ्युपगमे प्रतियोगिता तत्संबन्धावच्छिन्नापि विवक्षणीया । ब्रह्मणः सर्वेष्वेव देशेषु तादृशसंबन्धेन सत्त्वाभ्युपगमान्न व्यभिचारः । न भूताकाशस्य क्ष्मातलादेः कालस्य प्राच्यादेर्दिग्विभागस्य देशान्तरनिष्ठाभावप्रतियोगित्वेपि अव्याकृताकाशस्य महाकालस्य स्वस्य भिन्नायां विद्यायाश्च ब्रह्मवत्सकलदेशकालवृत्तितया तत्रासिद्धिरिति चेन्न । ब्रह्मातिरिक्तस्याव्याकृताकाशस्यानभ्युपगमात् । महान्तौ दिक्कालौ च न शुद्धब्रह्मातिरिक्तौ मानाभावात् । अविद्याया अपि देशनिष्ठात्यन्ताभावप्रतियोगित्वान्ना सिद्धिः । १ एवं कालतः परिच्छि

१. यदि कालतः परिच्छिन्नत्वं प्रागभावप्रतियोगित्व ध्वंसप्रतियोगित्वोभयरूपं तदा पञ्चमप्रकारापन्नाविद्यानिवृत्तौ उक्तपरिच्छिन्नत्वांगीकारे पुनरावृत्तिः प्रसज्येत । नचैवं किंतु कालिकसंबन्धावच्छिन्नात्यन्ताभावप्रतियोगित्वं तत् ध्वंसाभावेपि प्रागभावकाले स्वात्यन्ताभावमात्रेण उपपद्यते ।

न्नत्वमपि हेतुस्सम्भवति । तस्याप्यन्त्यन्ताभावीयकालिकसंबन्धावच्छिन्नप्रतियोगितारूपत्वात् । पञ्चमप्रकारस्य मोक्षस्य परिच्छिन्नत्वाभ्युपगमेपि न संसारस्य पुनरावृत्तिप्रसंगः । स्वप्रागभावकालनिष्ठात्यन्ताभावप्रतियोगित्वस्य तत्रोपगमेपि ध्वंसानभ्युपगमेन पुनरावृत्त्युपपादनायोगात् । वस्तुतःपरिच्छिन्नत्वं वा तत् । २ तच्च यत्किंचिद्वस्तुनिष्ठात्यंताभावीयतादात्म्यसंबन्धावच्छिन्ना प्रतियोगिता । न चाविद्यायामसिद्धिः । मूलाज्ञानातिरिक्तपल्लवाज्ञानाभ्युपगन्तृमते तयोस्तादात्म्याभावात् । तदनभ्युपगमेपि पञ्चमप्रकाराविद्यानिवृत्तौ तदभावान्नासिद्धिरिति संक्षेपः । ननूक्तानुमानं प्रत्यक्षेण ३ बाधितविषयत्वात्कालात्ययापदिष्टं । ननु सत्ताया दुर्निरूपत्वाभ्न बाधितं । तथाहि । किं सात्ताजातिः विधिगम्यत्वमर्थक्रियाकारित्वं वा प्रातिभासिकेतरत्वं वा असद्व्यतिरिक्तत्वं वा अबाध्यत्वंवा नाद्यः । पञ्चकाभ्युपगमेऽस्माकं न प्रत्यक्षविरोधः । तस्यास्माभिरनिराकरणात् । न षष्ठः । प्रत्यक्षस्योत्तरकालीनाबाधाविषयत्वायोगात् । तस्मात् गन्धर्वनगरमितिवत् प्रत्यक्षत्वग्रहस्तु भ्रमाद इति चेन्न । अबाध्यतायाःप्रत्यक्षग्राह्यत्वात् । नच तस्योत्तरकालीनबाधाभावाग्राहकत्वादिति । तदानीमबाध्यताग्रहेणैव सिद्धेः । तत्रातीताबाध्यतागन्धर्वनगरवदापि गृह्यत इति चेत्सत्यं । तथाप्यस्ति विशेषः । प्रामाण्यं हि ज्ञानस्योत्सर्गतः अपवादे अप्रामाण्यमिति विद्वत्सम्मतिः । तथा च तत्र बाधकादप्रामाण्यमुपस्थाप्यते । प्रकृते तु तादृशबाधकादर्शनात् त्रिकाला बाध्यतैव निरपवादा सिद्ध्यतीति चेन्न । अबाध्यतायाः स्वप्रकारकधर्मविशेष्य-

---

२. यत्किंचिदेति यद्यपि अन्योन्याभावप्रतियोगितैव तादात्म्यसंबन्धावच्छिन्ना तथापि एतन्न्यायमते सिद्धान्ते अन्योन्याभावप्रतियोगितायास्तादात्म्यसंबन्धावच्छिन्नत्वं नास्ति अत्यन्ताभेदे तादात्म्यानंगीकारात् तदुक्तं भेदासहिष्णु च तादात्म्यं नास्त्येवेति ॥

३. प्रत्यक्षबाधो नाम प्रत्यक्षजन्याप्रामाण्यज्ञानविषयज्ञानविषयत्वं ।

ताव्यापकाभावप्रतियोगित्वरूपत्वे ज्ञानाद्यतीन्द्रियघटितधर्मावच्छिन्नप्रतियोगिताकत्वेन योग्यानुपलब्धिविरहेण प्रत्यक्षासम्भवात्। स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगिरूपाबाध्यत्वस्यापि न योग्यानुपलब्धिरस्ति। अतीन्द्रियसाधारणधर्मविशिष्टस्योपलब्धिव्याप्यत्वाभावात्। न चात्यन्ताभावस्य प्रत्यक्षयोग्यधर्मावच्छिन्नप्रतियोगिताकत्वं तंत्रं नतु भेदप्रत्यक्षे तथास्ति। स्तंभादौ पिशाचभेदादेरप्रत्यक्षत्वप्रसंगात्। एवं चोक्तमिथ्यात्वपच्छेदग्राहिणा प्रत्यक्षेणोक्तानुमानस्य कालात्ययापदिष्टता दुर्वारेति वाच्यं। पिशाचभेदादेः प्रत्यक्षतावादिभिरप्यन्योन्याभावप्रत्यक्षे योग्यधर्मावच्छिन्नप्रतियोगिताकत्व जात्यवच्छिन्नप्रतियोगिकत्वान्यतरस्यैव तंत्रत्वोपगमेन तदुभयशून्यभेदस्य प्रत्यक्षानभ्युपगमात्। ४ अन्यथा पिशाचसंयोगित्वावच्छिन्नभेदस्यापि प्रत्यक्षतापत्तेः। ज्ञानानिवर्त्यत्वादिकं तु न सर्वथा प्रत्यक्षग्राह्यमिति शंकितुमशक्यं। भावविनिवृत्तिप्रतियोगित्वस्य सत्त्वेपीदानीं तदुपलम्भापादनासंभवात्। स्वाधिकरणनिष्ठाभावीययोग्यधर्मावच्छिन्नप्रतियोगिताभावस्य योग्यत्वेपि तस्य विशेषाभावग्रहरूपत्वेन सामान्यव्याप्ताज्ञानप्रतिबन्धकता। यो यद्धर्मावच्छिन्नाभावशून्य इति व्याप्तिस्त्वसिद्धा। विपक्षे बाधकाभावात्। अस्तुवा अनुमानग्राह्यविरोधिसत्त्वग्राहकं प्रत्यक्षं। तथापि चन्द्रप्रादेशिकत्वादिप्रत्यक्षवच्छंकिताप्रामाण्यकत्वेन नोक्तानुमानबाधक्षमं। नच तत्राप्रयोजकादिना विरुद्धत्वादप्रामाण्यस्याशंक्यत्वेपि घटस्सन्नित्यादिप्रत्यक्षस्य तथात्वं। बलवन्मानविरोधाभावादिति वाच्यं। तत्राप्युपक्रमादिलिंगावधृततात्पर्यकबलवच्छ्रुतिविरोधेनाप्रामाण्यशंकासंभवात्। नच बि

४. यदि स्तंभः पिशाचः स्यात् तर्हि पिशाचवदप्रत्यक्ष आपद्येत पिशाचो वा स्तम्भवत् प्रत्यक्षः स्यात् इत्यापादनसम्भवेन स्तंभे पिशाचभेदः प्रत्यक्षः। स्तंभो यदि पिशाचसंयोगी स्यात् तर्हि पिशाचसंयोगः प्रत्यक्षः स्यात् इत्यापादनायोगात् न पिशाचसंयोगः प्रत्यक्षः ॥

श्वं सत्यमित्याद्यागमविरोधः । तस्यान्यपरस्य देवताधिकरणन्यायेन बलवन्मानान्तरविरुद्धविश्वसत्यतायां असाधकत्वात् । विश्वस्मिन्सत्यतदात्म्यस्य बोधनेपि विश्वस्य पारमार्थिकत्वासिद्धेश्च । उपगम्यते चास्माभिरप्युपादानोपादेययोस्तादात्म्यं सन्घट इत्यादिप्रत्यक्षसिद्धं । नच श्रुत्या विश्वस्मिन्सत्तादात्म्यप्रतिपादनं व्यर्थं । प्रपञ्चे सत्तादात्म्यानभ्युपगन्तृवादिन एवाभावादिति वाच्यं । शून्यवादिना प्रपञ्चे सत्तादात्म्यानभ्युपगमेन वादिप्रसिद्धसत्तादात्म्यशून्यतानिषेधेन सत्तादात्म्यप्रतिपादनार्थत्वात् । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । यथा वादिप्रसिद्धमिथ्यात्व निषेधेन पारमार्थिकसत्त्वप्रतिपादनपरमिदं वाक्यमिति त्वयोच्यते तद्वत् । इयांस्तु विशेषः । बलवदशेषागमविरोधेनान्यपरात् अस्मात् विश्वपरमार्थतायाः सिद्ध्यसंभवेपि सिद्धं सत्तादात्म्यं परं व्यवहारकालाबाध्यत्वरूपमिति । विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वां । उततमावामस्येन्द्राब्रह्मणस्पती हविर्नोन्नं युजेव वाजिना जिगातमिति ऋक्संहिताद्वितीयाष्टकवाक्यस्यायमर्थः । हे ब्रह्मणस्पती मघवाना मघवानौ । मघमिति धननाम धनवन्तौ । विश्वं सर्वं सत्यं कर्म सद्भूतत्वात्फलस्यावश्यंभावित्वाद्वा तादृशं कर्म युवयोरित् । इदमवधारणे । वां युवामेव सर्वाणि कर्माण्यनुष्ठेयानीत्यर्थः । आपो व्यापनशीला देवताः । च नेत्येतत् पदद्वयसमुदायमेकपदमध्यापकसंप्रदायसिद्धं । वां युवयोर्व्रतं संकल्पं कर्मवा नप्रमिनन्ति न हिंसंति । डुमिञ्हिंसायां क्र्यादिकं । किंतु अनुमोदन्तीति यावत् । नोस्माकं हविर्दध्यादिकमन्नं च पुरोडाशादिकं चास्माभिर्लक्ष्य वाजिना वेगवन्तावश्वाविव युजा युक्तौ सन्तौ जिगातं देवयजनमागच्छतं । जिघातिगतिकर्मजं होरात्यादिकः । अन्नं घासं प्रत्यश्वाविवेति वा । यद्वा चनेत्यप्यर्थकमेकमेव पदमस्तु । देवाःप्रमिनंति प्रमावन्तो भवन्तीत्यर्थः । नच तस्य देवप्रमाविषयत्वेन पारमार्थिकत्वापत्तिः । सद्व्यवहार-

कालाबाध्यत्विषयकत्वघटितप्रामाण्यस्य विषयपारमार्थिकत्वं विनाप्यु-पपत्तेः । नन्वेवमपि विनिगमकाभावात् विश्वं सत्यमित्यादिवचनेन सत्यताविधानाय नेहनानेत्यादिवाक्यानि वादिप्रसिद्धमिथ्यात्व-मनुवदन्ति । एवं असदेवेदमग्रमासीदित्यादिवाक्यनिषेध्यसमर्पक-तया सत्यज्ञानादिवाक्यस्य तादृशसद्वाक्यानुरोधेनानुवादित्वकल्पना-यायुक्तत्वात् । उपक्रमोपसंहारादिभिरात्मना स्वस्वभावतायाएव तात्पर्योगमाच्च । तथाहि श्रुतिः सत्यं ज्ञानमित्युपक्रम्यात्मनोऽसत्त्व-निन्दापूर्वकं तत्सत्तां स्तुवन्ती प्रसरति । असन्नेव सभवति असद्ब्र-ह्मेति वेदचेत् अस्ति ब्रह्मेति चेद्वेद संन्तमेनं ततो विदुरिति । तथै-तदाहुः असदेवेदमग्रआसीदित्यसत्पक्षं परमतत्वेनानूद्य श्रुत्या दूषि-तत्वाच्च । असद्वा इदमग्रआसीदित्यादिवाक्यस्य गतिराचार्यै र्णोक्ते-ति चेत् तथापि श्रुतेरद्वैतब्रह्मपरत्वे उपक्रमाद्यनेकलिंगसाचिव्येपि तत्रानाश्वासे तादृशवाक्यनिषेध्यसमर्पकतया सत्यज्ञानादिवाक्यं ब्र-ह्मणस्सत्यतामनुवदतीति कल्पनमनालम्बनमेवेति द्रष्टव्यं । वस्तुतस्तु श्रुतिसहायरहितानन्ततर्काणामप्रयोजकतया न ब्रह्मसत्त्व जगन्मि-थ्यात्व वाधकतापि । ननु विश्वं सत्यमित्यादेर्विश्वसत्यत्वानुवाद इति वदता विश्वस्य प्रामाणिकताभ्युपेयते न वा । नाद्यः । तत्प्र-माणविरोधात् । निषेध्यस्य स्वेन प्रमाणविषयतानभ्युपगमात् । न द्वि-तीयः । असिद्धस्यानुवादायोगात् । लोकसिद्धानुवाद इति चेन्न । लोके प्रमाणेन सिद्धमनूद्यते भ्रान्त्या वा । नाद्यः । दत्तोत्तरत्वात् । नोत्तरः । तथैव लोकस्य भ्रान्ति सिद्धब्रह्मसद्भावो निषेध्यत इति चेन्न । उपक्रमादि लिङ्गावधृतस्वप्रकाशब्रह्मपरताकत्राक्यजातस्यानुवादकत्वं अतादृशकतिपयवाक्यानां तत्सत्तानिषेधपरत्वमिति कल्पनस्यायुक्त-त्वात् । न चासत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरमिति निरवकाशश्रुति विरोधः । न चासत्यशब्दोऽत्यन्तासत्परः । अत्यन्तासत्त्वाभ्युपग-न्तृवादिन एवासत्त्वादिति वाच्यं. न सत्त्वं यस्मिन्निति व्युत्पत्त्याऽस-

त्यशब्दस्य सत्त्वराहित्याद्यर्थकतया शून्यवादिप्रापितस्य सत्तादात्म्यशून्यस्यैवात्रोक्तेः । अथैवमपि विमतं विश्वं सत्यं प्रमाणदृष्टत्वादात्मवदित्यनुमानविरोध इति चेन्न । असन्नृश्रृंगमिति प्रमाणदृष्टे नृश्रृङ्गादौ व्यभिचारात् । अधिकमन्यत्र । किंच प्रमाणदृष्टत्वमित्यत्र तात्त्विकप्रमाणदृष्टत्वं विवक्षितं अतात्त्विकप्रमाणदृष्टत्वं वा । नाद्यः । अस्माकमसिद्धेः । प्रत्यक्षादिप्रमाणानां तत्वावेदकत्वानभ्युपगमात् । नोत्तरः । तत्रासिद्धेः दृष्टान्तस्य साधनविकलत्वाच्च नच तत्त्वावेदकत्वातत्त्वावेदकत्वविशेषानवधूय प्रमाणदृष्टत्वमात्रं हेतुः कुतो न स्यादिति वाच्यं । भ्रान्तिदृष्टत्वप्रमाणदृष्टत्वसाधारणदृश्यतात्वं नोक्तमिति त्वदुदाहृतायाः कृत्यायाः त्वां प्रत्यप्रतिबन्धप्रसरत्वापत्तेः । ननु प्रत्यक्षादीनामतत्त्वावेदकत्वे प्रमाणाभावादुत्सर्गतश्च बलवत्त्वाद्द्वैतागमविरोधायोग्यत्वात् । अत एव प्रत्यक्षादिकं तत्त्वावेदकं प्रमाणत्वात् । सत्यज्ञानादिवाक्यवत् । अन्यथा प्रमाणमेव न स्यात् । प्रपञ्चस्तत्त्वावेदकप्रमाणदृष्टः संप्रतिपन्नभ्रान्तेतरपदार्थत्वात् ब्रह्मवत् । आत्मत्वमुपाधिरिति चेन्न । अबाध्यत्वादेरात्मत्वस्य पक्षे संभवात् । अन्यथात्मत्वस्यापि ब्रह्मण्यभावस्स्यादित्यनुमानविरोध इति चेन्मैवं । आद्ये त्रिकालाबाध्यविषयकत्वघटितप्रमाणत्वस्य हेतुत्वे शुद्धस्यापि सप्रकारकवृत्तिवेद्यत्वमिति मते प्रत्यक्षादीनां सदधिष्ठान ब्रह्मविषयकत्वेन सिद्धसाधनात् । बाध्याविषयकत्वरूपप्रमाणत्वस्य तथात्वे मां प्रत्यसिद्धिः । ब्रह्मप्रमान्याबाध्याविषयकत्वघटितेन हेतुना बाध्यविषयकत्वघटितसाध्यसाधने त्वप्रयोजकता । ब्रह्मज्ञानेतराबाध्य विषयकत्वविशिष्टज्ञानजनकत्वमात्रेण हेतूपपत्त्या त्वदुक्तसाध्याप्रसरात् । नापि द्वितीयः । उक्तमते सिद्धसाधनात् । मतान्तरे त्वप्रयोजकत्वादात्मत्वस्योपाधित्वाच्च । यत्त्वत्र परेण ब्रह्मणि प्रमाणदृष्टत्वाभावात् दृष्टान्तस्य साधनविकलतेत्युक्तं तन्न । तस्य प्रमाणाविषयत्वे सत्यं न स्यात् । स्वतस्सिद्धत्वान्नेति चेन्न । स्वत इति स्वेनेति वा

प्रमाणेन विनेति वा। नाद्यः। अनभ्युपगमात्। नहि स्वस्मिन्स्वस्य कारणताभ्युपगम्यते। अन्यथा शशविषाणस्याप्येवं सिद्धिस्स्यात्। न द्वितीयः। प्रमाणाभावे सत्वं न स्यादित्यस्य प्रमाणेन विना सिद्ध्यतीत्यस्यानुत्तरत्वात्। सिद्ध्युपायान्तरस्यानुपन्यस्तत्वात्। सर्वत्र प्रमाणविषयतयैव स्वतस्सिद्धिरिति न शक्यमभ्युपगन्तुं। तथाहि। घटादीनां सत्ता तावत् चक्षुरादिना तज्जन्यज्ञानेन च सिद्ध्यतीति वक्तव्यं। तथाच तदपिच सदेव साधकमसद्वा। नाद्यः। तत्र प्रमाणप्रसराभावे सत्त्वासिद्धेः प्रमाणप्रसरे च तत्राप्युक्तरीत्या प्रमाणान्तरे प्रसरो वक्तव्यः। तथाच तत्राप्येवं तत्राप्येवं इत्येकैकस्मिन्विषयेऽविश्रान्तप्रमाणधारास्वीकारप्रसंगः। तद्वारणाय क्वचित्प्रमाणधाराविरामोपगमे यत्रैव विरामःतस्याप्रामाणिकत्वेनासत्त्वापत्तौ तत्पूर्वतनस्याप्येवं तत्पूर्वतनस्याप्येवमिति घटादीनामप्यसत्त्वापत्तेःन द्वितीयः असता प्रमाणेन तत्सिद्धौ सर्वेष्वपि तत्सिद्धिप्रसंगात्। ननु नायं दोषः। अस्मन्मते साक्षिणः स्वग्राहकत्वोपगमादिति चेन्न। एवं साक्षिगतस्वग्राहकतायाः प्रामाणिकत्वात्। यतस्तद्विशिष्टस्वग्राहकतैव वाच्या एवं तस्यास्तस्या अपि प्रामाणिकत्वाय साक्षिणः तत्तद्विशिष्टस्वग्राहकताया एव वाच्यत्वात् विषयानवस्थायादुर्हरत्वात्। मैवं। परस्परसत्तावगाहिसाक्षिद्वयोपगमादिति चेन्न। विषयविनिर्मोकेण प्रत्यक्षे ज्ञानाभावस्य आनुभाविकतया विषयविशेषितस्वविषयकत्वाविशिष्टसाध्यान्तरग्राहिताया एव स्वस्मिन् वाच्यतया तादृशसाक्षीतरग्राहितायाः प्रामाणिकत्वाय तज्ज्ञानाय साक्षिणोप्येतादृशसाक्ष्यन्तरग्राहकत्वविशिष्टतद्ग्राहकत्वस्यैव वाच्यत्वेन तस्यापि च प्रामाणिकत्वाय तत्तद्ग्राहकताविशिष्टसाक्ष्यन्तरग्राहकत्वमेव तस्य वाच्यमित्यननुभवपराहतविषयानवस्थाप्रसंगात्। साक्ष्यन्तरकल्पनाप्रयुक्तगौरवमात्रस्यैवास्मिन्पक्षे परिशेषाच्च। अन्यथा अन्यया अनुपपत्त्या ज्ञानधाराविरामो नोपेयः विषयानवस्था वा स्वीकर्तव्येति चेन्न। कतिपय

विषयसंस्पर्शविज्ञानानन्तरं तदवधूय विषयान्तरे प्रमाणतायाः सार्वजनीनत्वात् विषयानवस्थाया अप्यनुभवेन प्रत्याख्यानात्। ननुतस्या निश्चयमात्रतस्सिद्धं। एवं च साक्षिणस्स्वरूपतः स्वविषयकत्वमात्रेण स्वसिद्धिरूपता निष्प्रत्यूहैवेति चेन्न। स्वविषयकत्वस्याप्रामाणिकत्वेऽसत्त्वापत्त्या स्वविषयकसिद्धेरन्ततः सिद्धेः तत्प्रामाणिकत्वायास्वविषयकत्वस्वग्राहकत्वं साक्षिण इत्युक्तौ च पूर्वोक्तानवस्थैव जागर्ति। तद्विषयकत्वेनासिद्धाया अपि सिद्धेः तत्साधकत्वे ज्ञानं गुण इति सिद्ध्या पत्त्याऽपेक्षितसर्वसिद्धिप्रसंगः। अथोच्येत सिद्धिर्नतद्विषयकनिर्णय एव। किं तर्हि तन्निष्ठसंदिग्धताविरोधिज्ञानं। एवं च साक्षिणः स्वविषयकत्वकल्पनाप्रयासो हि तत्तद्विषयसंबन्धिनः तस्य स्वविषयतद्विषयकत्वविशिष्टस्वधर्मिकत्वसंशयविरोधिज्ञानरूपताभ्युपगममात्रेण प्रमाणविषयत्वेपि तत्सत्यत्वसिद्धेरप्रत्यूहत्वात्। शशशृङ्गसत्त्वासिद्धिप्रतिबंधित्वनिश्चयोपि तव दुष्परिहरः। उक्तरीत्याश्रयेण परिहारश्च ममापि तुल्यः तस्य स्वधर्मिकासति सिद्धरूपस्य ब्रह्मणः शास्त्रयोनित्वं। ननु ततश्च भवतीति कारणवाक्यानां यादृशार्थस्य प्रमाणान्तरेण सिद्धिः तादृशार्थानुवादकत्वमेव वाच्यं। नचाद्वितीयस्य वस्तुनः नापि प्रमाणेन जगत्कारणत्वावगमः। अवगमे वा विचारारम्भवैयर्थ्यमिति पुनरसंभवो लक्षणविचारयोरतिव्याप्तिश्चोक्तेश्वर इति शंका तत्तुसमन्वयादित्यत्र निरस्ता। इच्छानुमानसिद्धिप्रधानाद्यनुमानकत्वमेव कारणवाक्यानां नोक्तलक्षणब्रह्मपरत्वोपक्रमादितात्पर्यलिङ्गानामन्यथासिद्धत्वात्। एवंचोक्तलक्षणस्य च सा दुर्वारैवेति शङ्का निरस्यते। एवं सदेवेत्यादिवाक्यानां ब्रह्मणः समन्वयप्रतिपादकत्वादध्यायपादसंगतिः। अन्तराधिकरणेनेत्युक्तरीत्याक्षेपकइति। यद्वा सर्वजगत्कारणे समन्वयप्रदर्शनेन चेतनं तदिति व्याप्तिश्च। स्पष्टब्रह्मलिङ्गमित्युपक्षिप्तं तदाक्षिप्य समर्थ्यते इति सैव सङ्गतिः। तत्रच शाब्दिविप्रतिपत्तिविषयानुपलम्भे सति संशयः।

पूर्वपक्षस्तु नोक्तलक्षणस्य ब्रह्मणः जगत्कारणत्वं संभवति मानाभावात्। नच सदेवसौम्येदमग्रआसीदित्यादिश्रुतिर्मानं तस्यानुमानसिद्धप्रधानानुवादकत्वात्। नच तदैक्षत इति ईक्षणश्रुतिविरोधः। त्वन्मतेपि चिद्रूपस्य ब्रह्मणो निर्विशेषस्य ज्ञानसंकल्पाश्रयत्वायोगेन तद्विरोधस्य दुर्वारत्वात्। किंच कार्यानुकूलाश्शक्तयोपि न निर्विशेषस्योपपद्यन्ते तत्रा शक्तं तत्कारणं चेति व्याहतं। नच ब्रह्मण्यपि अनिर्वचनीयाः शक्तयस्सन्तीति सांप्रतं। अनिर्वाच्यत्वासिद्धेः सति सत्त्वेन प्रतीयमानस्य जगति श्रुतिप्रतिपादिताद्वितीयप्रत्यक्चैतन्यस्याद्वितीयत्वात्। अन्यथारूपोपपत्त्या स्वीकार्या। न चाद्यापि तादृशचैतन्यं प्रमाणपदवीमनुप्राप्तं येनार्थमभ्युपगच्छामः। तेन कर्तृत्वासंभवेपि ब्रह्मणः उपादानत्वमेव श्रुत्या प्रतिपाद्यतामिति निरस्तं। अपरिणामित्वात्। प्रधानस्य च ज्ञानानुकूलसत्त्वगुणयोरिव तादृशव्यक्तिकार्यात्मकशक्तिमत्तया परिणामित्वाच्च युक्तं जगत्कर्तृत्वमुपादानत्वं च। किंच शरीरादिजन्यत्वनियमदर्शनात् कथमशरीरस्यात्मनः जन्यज्ञानसंभवः। नित्यज्ञानं तु स्वरूपमेवेत्युक्तमिति। सिद्धान्तस्तु सांख्यपरिकल्पितं प्रधानं न जगत्कारणतया वेदप्रतिपाद्यं वैदिकशब्दाप्रतिपाद्यत्वात्। तथाचातिव्याप्तेर्नावकाशः। एवं चातिव्याप्तिवारणाय जगत्कारणतया वेदप्रतिपाद्यत्वसामान्याभावे साधनीये लक्षणस्य व्यधिकरणतया हेतुत्वं न संभवति। अशब्दमिति पदमेव हेतुसमर्पकतया भाष्ये व्याख्यातं। नच पक्षस्य साध्यैकदेशस्य चाध्याहारावश्यकत्वे जगत्कारणतया वेदप्रतिपाद्यः पक्षः प्रधानभेद एव साध्यमस्तु। एवं चाशब्दं नेति साध्यं ईक्षतेरिति च साध्यहेत्वोर्वैयधिकरण्यं नापि साध्यैकदेशाध्याहार इति वाच्यं। एवमपि जगत्कारणतया वेदप्रतिपाद्यत्वा नवच्छेदेन साध्यसिद्धिं विना तिव्याप्तिपरिहाराभावात् तदवच्छेदेन साध्यसिद्धेरुद्देश्यता वाच्या। एवंचाजामेकां मायांतु प्रकृतिं विद्यादित्यादिवाक्यानां जग-

त्कारणतया प्रतिपाद्ये इदं लक्षणस्योभयवाद्यसिद्धतया भागासिद्धि प्रसंगेण तस्य हेतुत्वासंभवात्। अस्मत्कृते च व्याख्याने स्वरूपासिद्धिशङ्का तु तृतीयपादे सप्रपञ्चं निरसिष्यते। नन्वेवं अत्रैव तस्य संगततया पादान्तरे तद्विन्यासो नैव युक्त इति चेन्मैवं। सिद्ध्यतो बाधस्य साध्यधर्मीविरोधितयान्तरंगत्वेन प्रथमतः तच्छङ्काया एव निरसनार्हतया उक्तसाध्यमबाधितं तद्विद्यादिभिः प्रधानादेरेव जगत्कारणतया बोधनादिति साध्ये शङ्किते तासां प्रधानपरताव्युदासेन ब्रह्मपरत्वसमर्थनस्यैव न्याय्यत्वात्। असम्भवदुस्स्थे लक्षणेऽतिव्याप्तिनिरासकहेत्वसिद्धिराहित्योपपादनस्याप्राप्तकालत्वाच्च। उपादाननिमित्तसाधारणनिखिलजगत्कारणतारूपलक्षणस्य एकतरमात्रकारणतासिद्धावपि संभवेन महतःपरमव्यक्तं अजामेकामित्यादौ उदाहृतायाः प्रधाने शंक्यत्वेपि बाधानवकाशेन तद्विचारस्यात्र सत्त्वात्। अन्यत्र पूर्वपक्षे च उपादानत्वमित्येवोभयप्रतिक्षेपादुभयसाधारणकोट्यवलम्बनेन सिद्धान्ते प्यसम्भवनिरासो भवतीत्याभिप्रायेण कर्तृत्वसाधकवीक्षणमेव द्वितीयसाध्ये हेतूकृतं। परमार्थतस्तु उपादानत्वमपि तस्यैवेति सुदृढाभिप्रायेण भगवता ज्ञानादित्यनभिधाय ईक्षतेरित्युक्तं। एवं चेल्लक्षणस्य तदैक्षत बहुःस्यामिति स्वगतबहुभवनज्ञानसंकल्परूपत्वात्। सत्यसन्धस्य सत्यसंकल्पस्य चान्यथाकरणायोगादात्मन एव बहुधाकरणमित्युपादानत्वं सिद्ध्यति। स्पष्टं च एतदेव वक्ष्यत्याचार्यः क्षीरवद्धयुपदेशादिति। एवं न सद्विद्यादीनां प्रधानपरत्वमेवेति वदता सांख्येन तत्त्वमस्यादिवाक्यार्थस्यान्यथावर्णनीयत्वेन सिद्धान्त्याभिमतलक्ष्यस्वरूपासिद्धिरभिमेतेति बाधाश्रयासिद्ध्यादिपरिहाराय औपाधिकसद्विद्याविचार एवात्र प्रचरितो भगवता सूत्रकारेण। भाष्ये तु तुल्यन्यायतामाश्रित्य अन्येषामपि विषयत्वमुक्तं। एवंच यत्किञ्चित्कारणवाक्यं परिहृत्य ज्ञेयविचारस्यापि लक्ष्यसिद्धिदृढीकरणायेति भवत्येव समन्वयसंगतिः। यत्त्वजामे-

कामिति वाक्ये सृज्यमानानामिति कर्तृत्वस्यापि बोधनसंभवः श्रूयते च । तस्मादधिकरणस्यात्र संगतिर्दुर्वारैवेति तदसत् । तथापि तत्राजादिपदानामव्यादिपरत्वेप्यसंभवस्य दुरुद्धरत्वात् एतदस्य जगत्कर्तृत्वसिद्धिमन्तरा अव्याकृतप्रधानवादयोर्भेद सिद्धेश्च । एवंचात्रासंभवातिव्याप्त्योस्तत्परिहाराय प्रधानस्याशब्दत्वहेतुना जगत्कारणतया वेदप्रतिपाद्यत्वाभावे साधिते बाधाशङ्कामुखेनासंभवातिव्याप्त्योः पुनराशङ्कायां वाक्यविशेषगतिनिरूपणेन तयोः परिहारो गतिसामान्योक्त्या च क्रियते । एवं च पादत्रयेण ब्रह्मणि समन्वयप्रतिपादनमुखेन प्रतिज्ञां प्रतिपाद्य साध्यविशिष्टपक्षसिद्धौ पूर्वहेतोरसिद्धिशङ्कायां तत्परिहाराय चतुर्थपाद आरभ्यत इति न किञ्चिदनुपपन्नं । अधिकमग्रे वक्ष्यामः । यद्यपि सामान्यतो शब्दत्वेनोक्तबाधनप्रकृत्वापि ब्रह्मणि समन्वयप्रतिपादने प्यसंभवादतिव्याप्तेरभावः सुग्रहः । तथापि शिष्यबुद्धिसौकर्यापेक्षणाभिधानोत्तरं सामान्यतोऽतिव्याप्त्यादिपरिहारः । कथंचिद्विशेषमाश्रित्य प्रकारान्तरेण तथा शङ्कायां च तत्परिहारश्च परबोधनप्रयोजनकेषु ग्रन्थेषु बहुधा दृश्यते । अन्यथा शास्त्रयोनित्वात् तत्तुसमन्वयादित्यनुक्तावपि विष्णावेव समन्वयोपपादनमात्रेण निखिलशब्दवाच्यगुणपूर्तिमत्त्वसिद्ध्या परपक्षेपि तादृशसूत्रद्वयवैयर्थ्यापातात् ब्रह्मशब्दोपात्तगुणान्तरपूर्तिवत् पदवाच्यतारूपगुणपूर्तेरपि मुमुक्षुज्ञेयत्वात् जिज्ञासाकारणीभूतगुणपूर्तिसिद्ध्यर्थमेव सर्वशब्दवाच्यताया अप्यत्र समर्थयितुं शक्यत्वात् । अथ प्रतिपिपादयिषितार्थस्य सामान्यरूपेण बोधनं शिष्यबुद्धिवैशद्यायेति चेत् तर्हि तन्ममापि तुल्यमित्यलमतिप्रसंगेण । ननु सदेवेत्यादौ ब्रह्मणः प्रतिपादनासंभवात् प्रधानमेवोक्तरीत्या तत्प्रतिपाद्यं वाच्यमिति नोक्तलक्षणे ब्रह्मणि वेदान्तानां समन्वयः । अत आह ईक्षते रिति । एवंच जगत्कारणतया वेदप्रतिपाद्यमशब्दं शब्दैकानधिगम्यमानुमानिकं प्रधानमिति यावत् । तन्न । ईक्षतेरीक्षत इति न धातुनिर्देश इ-

त्यादिभाष्यमेव वक्तव्यं । यद्वा सर्ववाच्यार्थाश्रयत्वसंबन्धेन धातुरेव हेतुतया निर्दिष्टः । एवंचाशब्दपदस्याऽऽवृत्त्याऽर्थद्वयपरत्वं बोध्यं । नच ब्रह्मणः ईक्षणाश्रयत्वानुपपत्तिरचद्यैव । ईश्वरस्यापि तदाकारवृत्तिप्रतिबिम्बितत्वलक्षणस्य ईक्षितृत्वस्य सुलभत्वात् । परमियान्विशेषः । जीवस्यान्तःकरणवृत्तावविद्यावृत्तौ च प्रतिबिम्बभावः शंक्यः । तमन्तरेण विषयसंबन्धायोगात् । परमेश्वरस्य तु सर्वात्मकस्यानावृतज्ञानरूपस्य सर्वरूपज्ञस्यैव आविद्यकाधाराधेयभावापन्नसर्वज्ञतासंभवेप्यतीतानागतवस्तुमानानुरोधेन ईक्षतिश्रुतिः अतीतत्वानुरोधेन चाद्यमायावृत्तावपि प्रतिबिम्बेनेक्षितृत्वाभ्युपगमः । एवंचैक्षतेत्यादौ चैत्रात्मा पश्यतीत्यादाविव प्रतिबिम्बितत्वादिरूपं कर्तृत्वमेवाख्यातार्थः । कथमन्यथा सांख्येनापि योगिनां सर्वज्ञत्वादिकमुपपादनीयं । सर्वज्ञबुद्ध्यगृहीतासंसर्गकत्वमात्रेणैव सर्वज्ञत्वव्यवहारः । न वस्तुतः सर्वज्ञत्वं जीवस्येति चेत् मुक्तिदशायामप्यसंसर्गाग्रहात्सर्वज्ञतापत्तिरिति अविशेषएव मुक्तिसंसारयोरापद्येत । एतस्य मुक्तिदशायामपि बुद्ध्यन्तरसम्भवात् विद्यमानतदीयबुद्धीत्यादिविवक्षायामपि तदीयत्वादेः दुर्निरूपतया दोषतादवस्थ्यं तदीयता हि तन्निष्ठप्रतियोगिताकसम्बन्धवत्त्वं प्रतियोगिता च यद्यात्मनोऽतिरिच्यते तत्स्वांगीकृतत्वे आत्मनः कूटस्थत्वाभ्युपगमविरोधः । नित्यत्वे च सिद्धान्तविरोधः । तैरात्मनो निर्धर्मकत्वाभ्युपगमात् । अतीतादिवच्च आत्मनश्चैतन्यमिति वाक्याद्विकल्पाभ्यां वृत्तिर्जायत इति वदन्ति लक्षयन्ति च शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति स्वरूपानतिरिक्तत्वे आत्मनो बुद्ध्याः संसर्गस्य स्वाभाविकतया निर्मोक्षत्वप्रसंगः निरस्तश्च ख्यातिपक्ष इति प्रथमसूत्र इति । यदि च पूर्वोक्तनव्यमतरीत्या बुद्धिपरिणामवृत्त्यादिकं मत्याश्रयत्वमेव कर्तृत्वमुच्यते तदा तुल्यन्यायतया मायावृत्त्याश्रयत्वमपि चेतनस्यैवेति न सर्वज्ञताभङ्गः । विस्तरस्तु रत्नावलीप्रकाशेऽनुसंधेयः । विशिष्टस्यैव जगदुपादानत्वं

कर्तृत्वं च न शुद्धस्येति मते प्रथमसूत्रे शुद्धब्रह्मैव जिज्ञास्यत्वेन प्रति-
ज्ञातं। जिज्ञासा च तन्निश्चयानुकूलं वेदान्तानां तत्परत्वावधारणं
तच्चेतरव्यावृत्तजिज्ञास्यस्वरूपावगत्यधीनमिति तदर्थं लक्षणे वक्तव्ये
तत्र स्वरूपलक्षणातिरिक्तस्य जगत्कारणत्वादेरसत्त्वेपि तस्योपलक्ष-
णतया व्यावर्तकत्वमस्तीति तदेव ब्रह्मोपलक्षणं द्वितीयसूत्रे प्रतिपा-
दितं। यद्यप्यानन्दादिकमस्ति स्वरूपलक्षणमिति तस्यैवाभिधानं
युक्तं। तटस्थलक्षणात् स्वरूपलक्षणस्यैवान्तरङ्गतया भ्यर्हितत्वात्। वे-
दब्रह्मशब्देनैवासंकुचितवृत्तिकेन अनन्ताख्यस्वरूपलक्षणस्य लाभा-
त्। तदुपलक्षितस्याविद्यानिवर्तकत्वावधारणाभावेन विचार्यता सं-
भवतीति विचारानारंभपूर्वपक्षस्य समाहितत्वात् जिज्ञासाकारणीभूता-
नन्त्यनिर्वाहकं तटस्थलक्षणमेवोपात्तं। एवंच सति कार्यकारणान-
न्यत्वन्यायेन वियदादेः विशिष्टानन्यत्वनिश्चये विशिष्टस्य च केवला-
नन्यत्वात् केवलस्यानन्त्यं सिद्ध्यतीति। ततश्च वेदान्तानां तार्किका-
नुमितकारणमात्रानुवादकतया नानंत्यवत् ब्रह्मात्मककारणबोधकत्वं
क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वादित्यनुमानैश्च लाघवे इतरबाधा-
दिसहकृतैश्च सविशेषतरवेदादिविशिष्टकारणमात्रसिद्धे वस्तुपरिच्छे-
दादिशून्यात्मकतया मानाप्रवृत्तेश्चेति न जगत्कारणतया शुद्धोपल-
क्षणत्वसंभवः। तदसंभवे च जगत्कारणस्यैव ब्रह्मातिरिक्तस्य सत्त्वा-
त् न जिज्ञास्यतासिद्धिरिति शङ्कायां तन्निरासात् अद्वितीयचेतनात्म-
कस्यैव कारणस्य शास्त्रयोनित्वमुक्तं। एवंचाद्वितीयस्यानंतस्य वस्तु-
नः शास्त्रप्रतिपाद्यत्वमन्तरेण तदीयविशिष्टरूपस्य जगत्कारणता न
सिद्ध्यति। शास्त्रस्य च तद्बोधकत्वं तु प्रमाणान्तरवेद्यत्वनिष्फल-
त्वाभ्यां न संभवति। देवताधिकरणन्यायश्च न प्रमाणान्तरविरुद्धे
प्रवर्तत इति शङ्का चतुर्था निराकृता। इदानीं सदेवेत्यादिवाक्यानां
सांख्याभिमतप्रधानानुवादकत्वमाशंक्य निराक्रियते। एवंच ईक्षणा-
दीनां शुद्धावृत्तित्वेपि विशिष्टवृत्तित्वान्न क्षतिः। एवमेवहि ईश्वर-

लिङ्गैः जगत्कारणत्वादिभिःशुद्धलिंगैरसंकुचितानांत्यमोक्षफलकज्ञानविपयत्वादिभिश्च प्रधानादिव्युदासेन वाक्यसमन्वये स्थिते यत्रोपासनादिकार्यश्रवणं तत्र श्रूयमाणगुणविवर्तासंभवात्। अगुणानां विशेपणता यत्रच पूर्वापरपरामर्शेन शुद्धब्रह्मपरतावसीयते तत्र गुणानां प्रधानविरोधेन विशेपणत्वासंभवादुपलक्षणत्वमेवेति व्यवस्था चोपपद्यते। शुद्धचिदीश्वरयोश्चात्यन्तिकभेदाविरहात् संसारित्वादवद्यगन्धरहितत्वात् भाष्यादौ परमेश्वरत्वेन व्यवहार इति ब्रह्मणः ईक्षितृत्वं तदैक्षतेत्यादिश्रुत्या प्रतिपाद्यते। नच तज्जडमात्रस्य संभवाति। नच ज्ञानशक्तिमत्त्वं वा प्रधनस्य ज्ञातृत्वव्यपदेश इति युक्तं केवलस्य जडस्य ज्ञातृत्वायोगेन केवलसद्विवर्ते ज्ञानत्वासंभवात् साक्षिता यांच तस्याभासकचित्प्रतिविम्बरूपमुख्यज्ञानावच्छेदकतया परं ज्ञानत्वमुपचर्यते। प्रतिविम्बश्चोक्तसंबन्धेन प्रत्यासन्न एव ज्ञातृताव्यवहारनिमित्तमित्यादिकं सप्रपंचं प्रतिकर्मव्यवस्थायामुपपादितमाद्यसूत्रे। एवं ब्रह्मव्यतिरिस्य सर्वस्य यथाऽनिर्वाच्यता यथा सद्वितीयप्रत्यगभिन्नब्रह्मपरत्वं सद्विद्याया स्तथा चतुर्थे च प्रसंगादुपपादितं। परिणामित्वासंभवेपि यथोपादानत्वं संभवाति तथा प्रकृत्यधिकरणे सूत्रकारो वक्ष्यति। शरीरादिकं विनापि महत्तत्वादिवदव्याकृताया आद्यकार्यमायावृत्तेरपि निर्वाहः संभवाति। नहि प्रमाणान्तराविरोधिन्यनुपपत्तिर्नामास्ति। अन्या कार्यमात्रस्य किञ्चित्कार्याव्यवहितोत्तरत्वनियमदर्शनादाद्यकार्यासिद्धिप्रसंगादिति। ननु तत्तदैक्षत आपऐक्षन्त इत्यादिगौणेक्षणप्रायपाठानुरोधात् तदैक्षतेति ईक्षतिरपि प्रत्यासन्नाकार्यतागुणयोगात् गौणस्स्यात्। यथाहि पतनोन्मुखे कूले कूलं पिपतिपाति इति प्रयोग इति ईश्वरं निराचष्टे गौणश्चेन्नात्मशब्दात् तेज ऐक्षतेत्यत्र ईक्षतिः गौणीति चेन्न। अनेन जीवेनात्मनानुप्रविश्येत्यादौ जीवसामानाधिकरण्येन श्रूयमाणात्मशब्दतात्पर्यगोचरत्वात्। नहि जडस्य प्रधानस्य जीवगततादात्म्यप्रतियोगित्वं।

यद्यपि शरीरादि प्रतियोगिकतादात्म्यप्रतियोगित्वं जीवादावस्ति एवमविद्यादितादात्म्यमपि साक्ष्यादौ वर्तत इति सिद्धान्ते व्याव हारिकमनिर्वाच्यं अचेतनात्मनोः तादात्म्यं सुलभमेव। तथापि पं ण नेदं वक्तुं शक्यं तेनानिर्वचनीयवस्त्वनभ्युपगमात्। सिद्धान्ते अव्याकृतस्य कथंचित् जीवतादात्म्यसंभवेपि तत्सत्यं स आत्म तत्त्वमसीत्यादौ आत्मपदस्याव्याकृतपरत्वे कथंचिदपि प्रामाण्यानि र्वाहात् तत्वबोधनपरोक्तप्रामाण्याय अवश्यमात्मपदं चेतनपरं वाच्यं तच्च सर्वात्मकप्रकृतकारणपरमिति उक्तकारणस्य चेतनत्वमावश्यकमि त्युक्तमेव। प्रायपाठानुसारेण ईक्षतेर्गौणत्वकल्पनामिति। ननु जीवे नात्मनेत्यादौ आत्मशब्दः ममात्मा भद्रसेनइत्यादाविव गौण एवे त्याशङ्कां निराचष्टे। तन्निष्ठस्य मोक्षोपदेशात् तस्मिन् जगत्कारणे निष्ठा सैव धीर्यस्य तादृशस्य आचार्यवान् पुरुषो वेद तस्यताव देवचिरं यावन्नविमोक्ष्ये ईप्सुरित्यनेन मोक्षोपदेशादित्यादिसूत्रमुक्ता वल्यां विस्तरः। अत्र वदन्ति अत्राधिकरणे किं विशिष्टस्य जग त्कारणत्वं तद्वाक्यबोध्यमिति सिद्धांत्यभिमते किंवा कर्तृत्वं बोध्य मिति यद्वा शुद्धस्य भ्रमाधिष्ठानत्वं बोध्यमिति। नाद्यद्वितीयौ। वि शिष्टे सदेवेत्यादिवाक्योक्तसत्त्वाद्ययोगात्। पूर्वसूत्रेऽखण्डसमन्वय स्यैव प्रतिज्ञातत्वेनाखण्डस्यैव वक्तव्यत्वात्। द्वितीये वैयधिकरण्यं च नहि प्रधानं परिणामीति प्राप्ते ब्रह्मकर्त्रिति सिद्धान्तो युक्तः। अ एव न तृतीयः। प्रधानं परिणामीति प्राप्ते ब्रह्माधिष्ठानमित्यस्य व्यधिकरणत्वात्। कथंचिद्वैयधिकरण्येपि तदैक्षत सेयं देवतैक्षत नामरूपे व्याकरोदित्यादिकमयुक्तं स्यात्। तस्य लक्षणया चिन्मा त्रपरत्वे च सर्वमपि लक्षणया प्रधानपरं स्यात्। सूत्रे ईक्षतेरित्यादि हेतूक्तिश्च नस्यात्। नच तात्पर्यविषये क्षणेन प्रधाननिरासः। अपि चात्र सदेवेत्यादिवाक्यसमन्वयोक्तिश्चेति आनन्दमयाभ्यासादिव वत् सदीक्षतेरिति स्यात् प्रधानस्याशब्दत्वमात्रनिरास श्चेत् इदमधि

करणं तन्निरासके चतुर्थपादे स्यात्। अस्मन्मते आनन्दमयः तद्ब्रह्मेत्यादिरूपेण विधेयतयाऽनुषंजनीयस्य तत्पदस्येहाशब्दं नेक्षतेरिति उद्देश्यसमर्पकतयान्वयः हेतुसाध्ययोः सामानाधिकरण्यं च स्यात् अशब्दं प्रधानं कारणं न कारणस्य ईक्षितृत्वादिति वदतो हेतुविभक्त्यभावेन साध्यत्वयोग्यश्रुताशब्दत्वरूपसाध्यत्यागेन साध्यकल्पनार्थं अध्याहृतस्य कारणपरशब्दस्य विभक्तिपरिणामेन अवृत्तिर्वैयधिकरण्यं च कारणमशब्दं प्रधानं नेति कारणस्योद्देश्यत्वे च अशब्दं हि तदिति हेतूक्तस्याशब्दत्वस्य कारणेऽसिद्धिः। किंचाशब्दत्वमवाच्यत्वं वा शब्दवृत्त्या शास्त्राविषयत्वं वा वेदासिद्धत्वं वा कारणत्वेन वेदासिद्धत्वं वा। त्वन्मते शास्त्रप्रतिपाद्यस्य शुद्धस्यावाच्यत्वात् अवाच्ये च वृत्त्यन्तरायोगात् नतु प्रधानस्य सांख्यमतस्यावाच्यत्वात् कारणत्वंनैवाजादिश्रुतिसिद्धत्वाच्च तथापि त्रिगुणस्योपादानतया मायां तु प्रकृतिं विद्यादिति श्रुतिसिद्धत्वांगीकाराच्च त्रिगुणस्य पारमार्थिकत्वादेव तद्विवादः। नन्वत्रानुमानिकमप्येकेषामित्यत्र आनुमानिकशब्देन सांख्यानुमानकल्पितं यत् त्वया विवक्ष्यते तदेवात्र मया अशब्दपदेन लक्ष्यत इति चेन्न। सांख्योत्प्रेक्षितानुमानगम्यत्वस्य प्रधानं सदेवेत्यादिवाक्यार्थो नेत्यत्र अहेतुत्वात् अन्यथा तार्किकोक्तानुमानगम्यत्वमीश्वरस्य सदेवेत्यादिवाक्यार्थता न स्यात्। त्वया च तत्राशब्दं हि तदिति तस्य तत्र हेतुत्वोक्तेः। किंच त्वयोक्ताशब्दत्वसिद्ध्यर्थं चतुर्थपादेन अव्यक्तादिपदानां सूक्ष्मशरीरादिपरतामुक्त्वा प्रधानपरतां निषेध्य तात्पर्यस्य वेदासिद्धत्वं त्वयैवाशब्दत्वं वाच्यं तच्चाशक्यमित्युक्तं। एतेन स्वप्रधानतया वेदप्रतिपाद्यत्वमशब्दत्वमिति निरस्तं। तदेतदभिप्रेत्योक्तं भाष्ये नचाशब्दत्वमितरासिद्धमिति। अनुव्याख्याने च न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसाविति। किंच आत्मनः ईक्षारूपस्य सर्वरूपेणेक्षितृत्वमव्यक्तादिति चेत्। जडविशिष्टस्य तु तत्संभवेना व्यक्तस्यापि आत्मविवे-

केनात्मविशिष्टस्य तत्स्यात्। तन्निष्ठस्येत्याद्युत्तरविरोधश्च। आत्मशब्दादित्यत्राध्यात्मशब्दवाच्यता हेतुश्चेत्यासिद्धिः तल्लक्ष्यत्वे तत्प्रतिपाद्यत्वमात्रेतु प्रधानस्यापि। किञ्च किमात्मशब्दस्य चेतनार्थत्वादचेतने प्रधाने तदनुपपत्तिर्विवक्षिता किंवा स्वरूपार्थत्वात् अनेन जीवेनात्मना चेतनतया प्रसिद्धजीवस्वरूपतया अचेतनेऽनुपपत्तिः। नाद्यः। चेतनस्य ज्ञातृतारूपत्वे ब्रह्मण्यपि शुद्धे तदभावात्। विशिष्टेचेत्प्रधाने उक्तरीत्या तत्सम्भवात्। ज्ञानरूपत्वे तदर्थश्च आत्मशब्दस्येक्षितृत्वं गौणमित्यत्रैव हेतुत्वेन गौणत्वाभावे हेतुत्वायोगात्। नान्त्यः। सर्वज्ञस्यासर्वज्ञत्वादिविरुद्धांशत्यागेन चिद्रूपेण जीवैक्यवत्कर्तृत्वादिविरुद्धांशत्यागेन प्रधाने ऐक्यस्यापि सम्भवात्। तन्निष्ठेति सूत्रे पि तच्छब्दार्थः शुद्ध आत्मा विशिष्टो वा। नाद्यः तस्याद्यसूत्रोक्तेक्षितृत्वाभावात्। नांत्यः विशिष्टस्य साक्षान्मोक्षान्वयायोगात् परंपरया तदन्वयस्तु प्रधाननिष्ठस्यापीति। इदमत्रावधेयं सर्वकारकशून्यतया ब्रह्मणो ज्ञानासम्भवं सूचयित्वापि प्रागुत्पत्तेरित्यादिभाष्येणैकात्मकत्वात् परिणामासम्भवौ सूचयतापि प्रधानस्येत्यादिभाष्येण ब्रह्मणः जगदुपादानत्वं जगत्कर्तृत्वं च न संभवतीति पूर्वपक्षोत्थापनात् ब्रह्मणः कर्तृत्वावलम्बनेन सिद्धान्तो न युक्तः शुद्धस्याप्युपाधिवच्छेदेनेक्षणादिकं संभवतीति उपपादितत्वात्। विशिष्टस्य कर्तृत्वमादाय सिद्धान्तपर्यवसानेपि न क्षतिः। शुद्धस्याप्यविचार्यत्वेपि विशिष्टगतजन्मादिकारणतायाः तदुपलक्षणत्वस्योक्ततया तस्याश्च विशिष्टावृत्तित्वे केवलं प्रत्युपलक्षणत्वायोगेन तदर्थं विशिष्टजगत्कारणताया अवश्यं व्यवस्थापनीयतया असंगत्यभावात् नचैवं सदेवेत्यादिवाक्योक्तस्यानुपपत्तिःविशिष्टस्यापारमार्थिकत्वाभ्युपगमादिति वाच्यं। शुद्धस्य पक्रमेपि रक्तो घट आसीत्स इदानीं नीलोऽभूदित्यत्रेव तच्छब्देन परामृष्टस्य शुद्धस्येक्षणकर्तृत्वविशिष्टात्म्यशालितया तदैक्षतेति प्रयोगोपपत्तेः वैयाकरणमते आख्यातस्य कर्तृवाचकत्वात्। किञ्चोपादान

कर्तृत्वं साधारणकारणत्वमात्रं चेतनगतमिति। सिद्धान्तेपि ईक्षणे सहेतु र्नसिद्ध्यतीति नोक्तविल्पावकाशः। नच तात्पर्यविषयेण ईक्षणेन साध्यसाधनायोगः परमतात्पर्याविषयस्याप्यवान्तरतात्पर्यविषयतासंभवात्। नन्वेवं सति ईक्षतेरिति गौण एव विन्यासः स्यादिति तदसत्। तत्र सदित्यस्य सदेवेत्यादिवाक्यप्रतिपाद्यमित्यर्थमंगीकृत्य तस्य साध्यनिर्देशत्वाभ्युपगमेन ईक्षणमात्रस्य हेतूकरणे जीवे व्यभिचारापत्तिः। तस्य पक्षनिर्देशत्वमभ्युपेत्य प्रधाने साध्याहारे च साध्यमेवाध्याहार्यं न पक्ष इत्यत्र विनिगमनाभावः। नच तत्तु समन्वयादित्यतः तदित्यनुवर्तते। तथाच पक्षसाध्यमेति नाध्याहारोऽनुसरणीय इति वाच्यं। तथासति हेतोरनेकान्त्यस्य युक्तत्वात्। आनन्दमयोभ्यासादित्यत्र च आनन्दमयोपलक्षितवाक्यविशेषेपि ब्रह्मपरत्वं साध्यं बाधकाभावविशेषितोऽभ्यासलक्षाचकपदघटितरूपाभ्यासशब्दार्थो हेतुर्वाच्य इति नानेकान्त्यं अन्यथा। त्वन्मतेपि व्यधिकरणस्याभ्यासस्य हेतुत्वानुपपत्तेः। व्यधिकरणस्यापि हेतुत्वं तावकमनोरथमात्रं तत्र तत्र निरस्तं निरसिष्यते च प्रसंगानुसारेण। एवंच हेतुपरिष्कारोपि तत्रावश्यकः। यथाविन्यासे तु तत्तुसमन्वयादिति सूत्रे ऽनुवृत्तमध्याहृत्य वा यत् शास्त्रयोनिपदं तदेवेह पक्षः आविधेयत्वे अशब्दमिति च अब्भक्षो वायुभक्ष इत्यत्राब्भक्षादिवत् अशब्दमित्यनेकशब्दानधिगम्यानुमानिकं प्रतीयते तद्भेदश्च साध्यं नञ्समभिव्याहृतेन नञा निर्दिशित इति न हेतोरनेकान्त्यादिवार्ता। एवंचासम्भववारणेपि नातिव्याप्तिपरिहारः संभवतीति शङ्कायां तन्निरासाय योजनान्तरमाश्रित्य अशब्दमानुमानिकं न शास्त्रयोनि न अशब्दत्वादित्यभिप्रायतया सूत्रं व्याख्यातं योजनाभेदेनार्थभेदलाभश्च सूत्रस्य भूषणं नतु दूषणं। यच्चोक्तमिदमधिकरणं एवं सति चतुर्थपादे संगतमिति तन्न। अत्राशब्दत्वादौ समन्वयहेतोरसमर्थनेन तत्पादानन्तर्भावात् कथमशब्दमित्यादिभाष्यस्य चायमर्थः। ईक्षितृत्वश्रवणा-

त्कारणस्य कथमशब्दत्वं आनुमानिकप्रधानरूपत्वामिति यावत्। एवं च कारणत्वेन शास्त्रयोनि नाशब्दमीक्षतेरिति योजना दर्शिता भवति। तथाच यदि कारणवाक्यमात्रस्य यद्यचेतनप्रधानपरता तदैवोक्तलक्षणासंभवस्स्यात्। नचैतदस्ति। सद्विधायामेव चेतनकारणत्वावगतेरिति भावः। तथाचायं निर्गलितार्थः पूर्वपक्षिणा शंकितायाः अतिव्याप्तेर्निरासाय योजना तच्छंकितस्यासंभवस्योक्तानुमाने बाधस्य च परिपाराय द्वितीया योजना। एवंच न योजनाद्वयवैयर्थ्यं योजनायामस्मन्मते क्लेशोवेति सर्वं समञ्जसामिति। अशब्दत्वं च वैदिकतात्पर्यगोचरत्वाभावः। तच्च चतुर्थपादे प्रपञ्चयिष्यते। एतेन नायं हेतुः परं प्रति सिद्ध इति समाहितं। प्रसाध्यस्यापि हेतुतयोपन्यासस्य सांप्रदायिकत्वात्। अन्यथा एवं परं प्रति असिद्धानामुपक्रमादीनां शास्त्रस्य विष्ण्वेकनिष्ठत्वे हेतुतया पूर्वसूत्रे त्वदुक्तिरप्युन्मत्तप्रलापः स्यात्। एवं सति द्युभ्वाद्यायतनं स्वशब्दादित्यत्र आत्मशब्दस्य शिववाचकत्वेन पराभ्युपगतस्य तद्भेदं साध्ये हेततया युक्तिरपीति बहुशः तत्तदवसरे निरूपयिष्यामः। आत्मन ईक्षारूपस्यापि ईक्षितृत्वमुपपादितं प्राक्। भेदस्य तु प्रधानस्य न कथंचिदीक्षितृत्वं। तन्निष्ठत्यस्य तदीयकेवलरूपनिष्ठस्य मोक्षोपदेशादित्यर्थकतया विशिष्टस्यैव जगत्कारणतामतेपि न तद्विरोधः शंकनीयः। यच्चप्यात्मशब्दादिति द्वितीयसूत्रस्थहेतोर्विकल्प्य दूषणं तदपि तत्सूत्रव्याख्यानावसरे निरस्यमेव। समाप्तम्॥

---

॥ श्रीरामचन्द्रो विजयते ॥

सत्यज्ञानानन्दलक्ष्यं परिच्छेदविवर्जितम् ।
अस्पृष्टानर्थमनिशमाश्रये नृहरेः पदम् ॥

विमतं मिथ्या दृश्यत्वात् यदित्थं तत्तथा यथा संप्रतिपन्नं न च जगतोऽभावादाश्रयासिद्धः पक्षः । तस्य पारमार्थिकत्वाभावेपि तत्र विमतत्वरूपपक्षतावच्छेदकस्योभयमतसिद्धतया आश्रयासिद्धेरसंभवात् । परमार्थसद्भेदविशिष्टपक्षादेराश्रयासिद्धत्वे शशे प्रतीतं शृङ्गं न पारमार्थिकं प्रमाणाविषयत्वादित्यादेरपि त्वन्मते आश्रयासिद्धत्वप्रसंगात् जगतो भावादाश्रयानिर्वोत्त्वपक्षेपि आश्रयत्वप्रयोजकसत्त्वाभावेनाऽऽश्रयासिद्धिर्दुर्वारेति चेन्न । सत्त्वस्याप्याश्रयत्वप्रयोजकत्वे असतः सत्त्वादिरूपधर्माश्रयत्वप्रसंगात् । आश्रयत्वशब्देनानुमित्युद्देश्यत्वोक्तावप्युक्तं दूषणं । एतेन जगतोऽसत्यत्वे प्रतिज्ञातेऽपसिद्धान्तः तदुक्तं जगतो भावादायासिद्धः पक्ष इति । पक्षःप्रतिज्ञातार्थः प्रपञ्चस्यासत्यत्वलक्षणः स चाश्रयासिद्धः आश्रयासिद्धान्तः तदाश्रयेण कथाप्रवृत्तेः । तस्मिन्नासिद्धः तद्विरुद्ध इति यावत् । कुतः जगतो भावात् भावत्वेनासद्विलक्षणत्वेन परेणांगीकृतत्वादिति परास्तं । जगतोऽत्यन्तासत्त्वस्याप्रतिज्ञासितत्वात् । तस्यानिर्वचनीयत्वासिद्धेरप्रसिद्धविशेषणता दुर्वारेति चेन्न । शुक्तिरूप्यादावुभयवादिसिद्धस्य सद्विलक्षणत्वमात्रस्य त्वां प्रति साध्यत्वात् । यत्त्वसद्वैलक्षण्यमात्रस्योभयवादिसिद्धत्वात् सद्वैलक्षण्यमात्रस्य साध्यत्वे अत्यन्तासत्त्वमादायार्थान्तरतापत्तेःसदसद्वैलक्षण्यस्य मिथ्यात्वे सिद्धसाधनता । साति सदन्तरभेदस्यासद्भेदस्य चोभयवादिसिद्धत्वादिति । तदसत् । शुक्तिरूप्यादेरनिर्वचनीयत्वाभ्युपगन्तृभास्करैकदेशिनं प्रत्यर्थान्तरवारकं पक्षविशेषणमनुपादाय सदसद्वैलक्षण्यसाधनेपि सद्भेदविशिष्टासद्भेदरूपस्य सद्भेदासद्भेदोभयत्वाच्छिन्नरूपस्य वा प्रकृतसाध्यस्य पक्षे तन्म-

तासिद्धतया सिद्धसाधनानवकाशात्। नहि विशेष्यवत्तयाऽवगते वि-शिष्टसाधने सिद्धसाधनत्वं तान्त्रिकानुमतं। क्षित्यंकुरादिकं कर्तृजन्यं कार्यत्वादित्यत्रापि सिद्धसाधनतापत्तेः। एकदेशसिद्धावप्युभय-यत्वावच्छिन्नसाधने सिद्धसाधनत्वे गुणादिकं गुण्यादिना भिन्ना-भिन्नं १ समानाधिकृतत्वादित्यादावपि तदापत्तेश्च। सद्विलक्षणत्वं च सत्त्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं नातः सति सदन्तरभेदमादा-य सिद्धसाधनता। सन्निष्ठासन्निष्ठभेदप्रतियोगित्वं च न सत्त्वावच्छि-न्नं। तथासति परमते असन्नित्यादिप्रतीतिः प्रमात्वापत्तेः। प्रकृतसा-ध्यशरीरप्रविष्टा सत्ता च अबाध्यं सर्वं प्रमेयमित्याद्याकारक यत्कि-ञ्चिज्ज्ञानविशेष्यत्वं। एतादृशवाक्याजन्यबोधव्यक्तेः व्यक्तित्वेन निवे-शाच्च नान्योन्याश्रयत्वादिः। अबाध्यशब्दार्थश्च तत्तन्मतेऽसम्भावृत्तो धर्मः कश्चिदवश्यं वाच्यएवेति न तादृशज्ञानादौ लिङ्गमिति प्रसंगो वा स्वप्रकारकधी विशेष्यताव्यापकाभावप्रतियोगित्वाभावो वा। सा-गरैरपि धर्मस्यावच्छेदकत्वोपगमात् न तदवच्छिन्नभेदाप्रसिद्धिः वस्तुतस्तु स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वमेव सद्वि-लक्षणत्वं तच्च नासतः उभयादिसिद्धमिति नोक्तदोषावकाशः। ए-तेन कथं सत्यता अर्थाक्सामर्थ्याद्विलक्षणत्वं तदनाश्रयत्वसाधनेऽप-सिद्धान्तः। तथाचेत् सिद्धसाधनतैव सत्त्वमबाध्यत्वं बाध्यत्वं मि-थ्यात्वमिति तद्विवेक इति चेत् तर्हि बाधो वक्तव्यः। अन्यथा विज्ञान-स्य सम्यग्विज्ञानं चेत् सिद्धसाधनतैव। क्षणिकत्वादिना विज्ञातस्या-क्षणिकत्वादिना अबाधज्ञानविषयत्वस्यास्माभिरंगीक्रियमाणत्वा-त्। २ प्रतिपन्नोपाधौ त्रैकालिकसत्तानिषेध इति चेन्न। सत्यताया

१ समानाधिकृतत्वं च समानविभक्तिकपदोपस्थाप्यत्वं। तदापत्तेः सिद्ध-साधनतापत्तेः।

२ स्वप्रकारकज्ञानविशेष्यनिष्ठाभावप्रतियोगित्वं। शुक्तिं दृष्ट्वा इदं रजत-मिति ज्ञाने रजतं प्रकारः शुक्तिर्विशेष्या स्वपदेन रजतोपादाने स्वप्रकारक-

एत्राद्याप्यनिरूपणात् । किञ्चैवमत्यन्तासत्त्वमेव प्राप्तं मिथ्याश्रया-सिद्ध्यादिप्रत्यापत्तिः सत्त्वनिषेध एव क्रियते नत्वसत्त्वविधिरिति चेन्न । सत्त्वनिषेधातिरिक्तस्यासत्त्वस्याभावात् भावेऽपि वा सत्त्व-निषेधेनैव वा आश्रयासिद्धिस्स्यात् । असत्त्वमनाश्रयत्वे प्रयोजकं न सत्त्वाभाव इति चेन्न नियामकाभावात् समंप्रतिवादिनापि चेदस्तु तावत् । आश्रयासिद्ध्यादिसंदेहेप्यनुमानसाधकं व्यावहारिकसत्ता-स्वीकारादाश्रयोपपत्तिरिति चेत् केयं व्यावहारिकसत्ता । यदासन्नि-त्यादिव्यवहारहेतुः तदासिद्धं नस्समीहितं व्यर्थं च व्यावहारिक-त्वविशेषणं । सत्तामङ्गीकृत्य पुनस्तन्निषेधे परस्यापसिद्धान्तः । पारमा-र्थिकत्वमेव निषिध्यते नतु व्यावहारिकसत्तेति चेत् किमिदं पारमा-र्थिकत्वं व्यावहारिकत्वं चेत् निषिध्यतां न नो हानिः । अनिर्वाच्यत्व-मिति चेत् बाध्यत्वनिषेधोऽबाध्यत्वमेव । तच्च सत्तानिषेध इति कुतो व्यावहारिकसत्तापीतीतरेतराश्रयत्वदोषो वा स्यात् । भ्रान्तिसिद्धस त्ताव्यावहारिकसत्तेति चेत् नास्ति सत्त्वेन्यनाश्रित इव ननु प्रतीतिगो-चरतामात्रेणाश्रयत्वोपपत्तौ किं सत्तया । सुरभितासाधने तु गगनार-विन्दस्य नाश्रयता न सत्ताविरहात् । अपितु निरुपाख्यत्वादिति चेन्न । तथासति शशशृङ्गगनारविन्दसत्ताप्रतीतौ तत्र सुरभितासाध-नेन आश्रयासिद्धिरुद्धाव्येत अस्त्वेवं रूपान्तरवैकल्यं भविष्यतीति चेत्

---

ज्ञानं रजतज्ञानं तद्विशेष्यं शुक्तिः तन्निष्ठो योभावः रजताभावःतत्प्रतियोगि त्वं रजतस्य । असतोऽप्रकारत्वात् । येन संबन्धेन येन रूपेण यद्यत्र प्रती-यते तत्तेन संबन्धेन तेन रूपेण तत्र नास्तीति अर्थो लभ्यते । तथासति रजते प्रकारता प्रतियोगिता च एकसम्बन्धावच्छिन्ना एकधर्मावच्छिन्ना च भवति । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमित्यस्यायमनुगमः । प्रकारताविशिष्टप्रतियोगित्वं मिथ्यात्वं । प्रतियोगितायां प्रकारतावैशिष्ट्यं च स्वावच्छे-दकसंबन्धावच्छिन्नत्व स्वावच्छेदकधर्मावच्छिन्नत्व स्वनिरूपितविशेष्यता-व्यापकाभावनिरूपितत्व एतन्नितयसंबन्धेन ॥

काल्पनिकागमवैकल्यस्य सर्वत्र सौलभ्यात्। तथाच साधनतदाभासनियमः स्यात्। किञ्चैवं सति प्रकृतानुमानस्यापि तत्त्वावेदकत्वं न स्यात्। गगनारविन्दस्यापरोक्षप्रतीतिर्नास्तीति चेत्। तथा सत्यतीन्द्रियप्रपञ्चभागस्यानाश्रयत्वं स्यादिति। यत्तु निषेधं प्रत्यसतोऽप्याश्रयत्वं सम्भवति। यथा वन्ध्यासुतो न वक्तेति अन्यथा स्ववचनव्याघातादिदोषप्रसंगः। एवं चात्यन्तासत एवाश्रयत्वधौव्ये किम्रु वाच्यं व्यवहारतः प्रपञ्चस्येति तदनुपपन्नं। तथासति प्रपञ्चस्य व्यावहारिकसत्तास्वीकारवैयर्थ्यप्रसंगात्। निषेधं प्रत्याश्रयत्वे विधिं प्रति तत्कस्मान्न स्यात्। नहि विधिनिषेधयोर्वस्तुतः कश्चिद्विशेषः। एतेन सत्त्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वं मिथ्यात्वमिति निरस्तमित्यपास्तं। अस्मन्मते तावदत्यन्ताभावमात्रस्य केवलान्वयितया प्रतिबन्धकाभावो न कार्यमात्रहेतुः अतिप्रसंगादिति कारणीभूताभावप्रतियोगित्वं न प्रतिबन्धकत्वमिति तद्घटितं हेत्वाभासलक्षणमयुक्तं। अतः प्रकृतानुमितिजनकज्ञानविषयकपरोक्षज्ञानजनकाज्ञाननाशकता यद्रूपावच्छिन्नविषयकत्वेन तद्रूपावच्छिन्नत्वं दोषत्वमिति वाच्यं। एवंच पक्षतावच्छेदकप्रकारकग्रहजनकाज्ञाननाशकता यद्रूपावच्छिन्नविषयकत्वेन तद्रूपावच्छिन्नत्वमाश्रयासिद्धत्वमित्यादिविशेषलक्षणानि निर्वाच्यानि। एवंच गगनारविन्दं सुरभ्यरविन्दत्वादित्यादौ गगनीयत्वविशिष्टज्ञानजनकाज्ञानस्य गगनीयत्वाभावविशिष्टारविन्दविषयकनिश्चयनाश्यत्वादुक्ताभावविशिष्टारविन्दत्वादेः आश्रयासिद्धत्वोपपत्तिः। अत एव वह्निरनुष्णः कृतकत्वात् इत्यादौ बाधः। वह्निरुष्णस्तेजस्त्वादित्यादौ तदभावश्चोपपद्यते। वह्निरनुष्ण इत्यादौ भ्रमजनकाज्ञानस्य वह्निरुष्ण इत्यादिधीनाश्यत्वात्। वह्निरुष्ण इत्यादिभ्रमजनकस्य मूलाज्ञानस्य च वह्निरुष्ण इत्यादिबुद्ध्यनिवर्त्यत्वाच्च। शुद्धब्रह्मज्ञानं न किंचिद्रूपावच्छिन्नविषयकत्वेनाज्ञाननिवर्तकं अतो न कोपि दोषः।

विस्तरस्तु प्रमाणतत्त्वविवेके द्रष्टव्यः। त्वन्मते तु प्रकृतानुमित्यनुकूल-शक्तिविघटकता यद्रूपावच्छिन्नविषयकत्वेनेत्यादिरीत्या अन्यथा वा दोषसामान्यलक्षणं निर्वाच्यं। एवं चास्मन्मतेपि त्रिमतत्वप्रकारकज्ञानजनकाज्ञानस्य यद्रूपावच्छिन्नविषयकधीनाश्यत्वं तादृशरूपमेवाप्रसिद्धमिति नाश्रयासिद्ध्याद्यवकाशः। यदि च अवच्छिन्नानवच्छिन्नचिद्विषयकमेव मूलाज्ञानमिति मतं। तथापि यद्रूपविशिष्टावच्छिन्नचिद्विषयताकमज्ञानं प्रकृतानुमितिसमानविषयकं। यच्चसतो ख्याख्यायमानत्वे आश्रयत्वे चापसिद्धान्तः। प्रपञ्चस्य व्यावहारिकसत्त्वास्वीकारवैयर्थ्यप्रसंगश्चेति तन्न। असदपरोक्षस्यैव सिद्धान्तविरुद्धत्वात्। असद्विषयकविकल्पाख्यवृत्तेः चन्द्रिकादौ कण्ठोक्तत्वात् ब्रह्मप्रमान्याबाध्यत्वे सति बाधयोग्यत्वरूपव्यावहारिकसत्त्वस्य प्रमाणसिद्धस्य प्रत्याख्यातुमशक्यत्वाच्च। ब्रह्मप्रमान्याबाध्यत्वमात्रयोरनुमतं। बाध्यत्वं च श्रुत्यनुमानसिद्धमिति वक्तृभेदादेरवभास्य सद्वैलक्षण्यतद्रूपत्वं तादितिरीत्याऽनिर्वचनीयत्वं निर्वाच्यं। अधिकं तु प्रमाणतत्त्वविवेकादौ द्रष्टव्यं। भ्रमविषयतादेः बाधस्य चासति प्रामाणिकव्यवहारसिद्धत्वात् तत्र विधिनिषेधाश्रयत्वं दुरपह्नवं। असत्पदस्य सद्भिन्नार्थकस्य भेदानाश्रये प्रवृत्त्ययोगाच्च। स्वात्यन्ताभावसमनाधिकरणतया प्रतीयमानत्वं च स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वपर्यवसितं। न परोक्तरीत्या स्वाधिकरणप्रतीयमाननिष्ठात्यन्ताभावप्रतियोगित्वं। अन्यथाख्यातिमादायार्थान्तरापत्तेः अवृत्तित्वमादायार्थान्तरं च वृत्तिमत्त्वेन पक्षस्य विशेषणीयत्वात् न संभवति। प्रकारान्तरानुसरणे गौरवं। यच्चात्यन्तासत्त्वमादाय अर्थान्तरप्रसञ्जनं तदप्येतेन प्रत्युक्तं। किञ्च यद्यत्यन्तासत्त्वमुक्ताभावप्रतियोगित्वं तदानार्थान्तरावकाशः। नहि प्रतिवाद्यसिद्धं वादिना सिषाधयिषितं प्रकृतोपयोगि च तदादायैव नार्थान्तरतातिप्रसंगात्। किञ्चोक्तप्रतियोगित्वस्य नात्यन्तासत्त्वरूपता नैयायिका

दिभिः अवृत्तौ परमार्थसत्त्वेपि तदभ्युपगमात् त्वन्मते कूर्मरोमादौ अनारोपितेऽसत्त्वाव्यापकत्वाच्च। वृत्तिमत्त्वसहितं तदत्यन्तासति न संभवतीत्यन्यत्र विस्तरः। यत्तु दृश्यत्वाभावादसिद्धो हेतुरिति तदप्यसत्। दृग्विषयतारूपदृश्यत्वस्य पक्षे वादिद्वयसिद्धत्वात्। अन्यथा धूमहेतुकरणेप्ययं धूमो हेतुः धूमान्तरं वा नाद्यः। दृष्टान्तस्य साधनविकलत्वापत्तेः न द्वितीयः स्वरूपासिद्धिदूषणापत्तेश्च। यत्तु न धूमादेर्हेतुतायामयं दोषः। तत्र सकलधूमसाधारणस्य धूमत्वसामान्यस्योभयवादिसिद्धत्वात्। नच सत्यानिर्वाच्यसाधारणसामान्यमुभयवादिसिद्धं। अनिर्वचनीयस्य स्वरूपत एवास्माकमसिद्धेः न चासदाश्रयं सामान्यं सिद्धं भवतीति तदसत्। एवं सति विमतो भिन्नः मुक्तत्वादिति त्वदुक्तावपि भेदत्वस्य सदसत्साधारणस्यैकस्याभावेनानिर्वाच्यगतस्य तस्य साध्यतावच्छेदकत्वे तवापसिद्धान्तात्। परमार्थगतस्य तस्य तत्त्वे मां प्रत्यप्रसिद्धविशेषणत्वापत्तेर्दुर्वारत्वात्। अनिर्वाच्यतासिद्ध्या तन्मूलकविकल्पायोगात् उक्तदूषणोद्धारे च तुल्यं प्रकृतेपि। किञ्च कथयामध्यस्थादीनां पक्षे हेतुमत्ताप्रतिपादनाय वादिना हेतुः प्रयुज्यते। तेषां च यथामतं भवत्येव हेतुमत्ताप्रतिपत्तिः स्वरूपासिद्ध्याद्युद्भावनं प्रागुक्तरीत्या नावकाशं लभत इत्युद्भावयितुः कृतकृत्यतया सदनिर्वाच्यसाधारणसामान्यानभ्युपगमो न दोषाय। अन्यथा धूमत्वादेरपि प्रत्येकवृत्तिमात्रमिच्छतः तव मते धूमद्वयसाधारणसामान्याभावेन पक्षीयधूमगतस्य हेतुतावच्छेदकत्वे दृष्टान्तस्य साधनविकलता महानसीयधूमगत धूमत्वस्य तथात्वे च स्वरूपासिद्धिरिति दोषः कथं वारणीयः। अथोच्यते धूमस्य धूमत्वाश्रयशक्तिराद्ययोरनुमता। तथाच धूमादित्युक्तं अनुगतधर्मवादिनोऽन्यस्य स्वसामग्रीवलात् पक्षदृष्टान्तसाधारणधूमप्रतीतिर्नानुपपन्नेति नोक्तदोषावकाश इति चेत् तुल्यं प्रकृतेपि। अन्यथा विमतं सत्यं दृश्यत्वादित्यनुमानेपीयं तदवस्था स्यात्। यद्यपि वृत्तिव्याप्यत्वस्य साधार-

णस्य दृश्यत्वस्यात्मनि पक्षे सत्त्वेनानैकान्तिकत्वापातात् दृग्जन्यफलाश्रयत्वं दृश्यत्वं त्वया वाच्यं। तदा ज्ञाततालक्षणफलस्यान्यत्र निराकृतत्वेनास्मन्मते दृश्यत्वाभावादसिद्धो हेतुः। ज्ञातताङ्गीकारेप्यतीतादावतीन्द्रियेषु च दृश्यत्वाभावात् भागासिद्धिरिति तदयुक्तं शुद्धे ब्रह्मणि वृत्तिव्याप्यत्वस्यानभ्युपगमे यथाश्रुतस्य मतान्तरे स्वानतिरिक्तविषयकज्ञानबाध्यदृग्विषयत्वरूपस्य सत्यादिपदतात्पर्याविषयकदृग्विषयत्वरूपस्य वा दृश्यत्वस्य हेतोर्वक्तव्यतया अनैकान्तिकतासिद्ध्योश्चानवकाशात्। यत्त्वनिर्वचनीयाभावात् विरुद्ध इति तदप्यसत्। त्वां प्रति सद्विविक्तत्वमात्रस्य साध्यतयोक्ततया शुक्तिरजतादेरेव सपक्षस्य सुलभत्वात्। एतेन शुक्तिरजतादेस्सत्त्वस्य विपक्षतया तत्र वर्तमानत्वात्साध्यविपरीतव्याप्त्याद्विरुद्धो हेतुरिति परास्तं। रजतादेरुक्तरीत्या विपक्षत्वाभावात्। जगतोऽनिर्वाच्यत्वेनानुमानस्याप्यनिर्वाच्यत्वेपि तत्र अनध्यवसितत्वप्रयोजकस्यात्यन्तासत्त्वस्यानभ्युपगमेन तर्कबाध्यत्वाभावात् नानध्यवसायः। कारणतायाः परमार्थसत्त्वाघटिततया तदव्याप्यत्वाच्च। तदुक्तं खण्डनकृद्भिः "पूर्वसंबन्धनियमे हेतुत्वे तुल्य एव नौ। हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथेति। स्वाप्निकभोजनरोदनादेरनिर्वाच्यस्याप्यर्थलाभहेतुतायाः भुक्त्वा रुदित्वा ध्रुवमर्थलाभ इति स्मृतिसिद्धत्वात् स्वाप्निकार्थपरमार्थतायाः अद्याप्यसिद्धेश्च। यत्त्वनन्यथासिद्ध नियतपूर्ववृत्तित्वं कारणत्वं नियतपूर्ववृत्तिता च कार्याधिकरणावच्छेदेन कार्याव्यवहितप्राक्क्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदककारणतावच्छेदकत्वाभिमतधर्मवत्त्वरूपं। तथाच निखिलात्यन्ताभावानां केवलान्वयित्ववादिनः तव मते तदयोगान्नानिर्वाच्यस्य कारणत्वोपपत्तिः। प्रतियोगिव्यधिकरणत्वेनाभावविशेषणत्वेपि त्वन्मते सर्वस्याप्यभावस्य प्रतियोगिसमानाधिकरणतया तादृशाभावाप्रसिद्धिरिति। तदप्यसत्। कारणतायाःशक्तिविशेषरूपत्वात्। अस्तुवा नियतपूर्ववृत्तित्वमेव कारणत्वं तथापि का-

र्याधिकरणावच्छेदेन कार्याव्यवहितप्राक्क्षणसंबन्धस्वविशिष्टसामान्य कं यद्यत् स्वं तदन्यतादृशधर्मवत्त्वस्यैव नियतपूर्ववृत्तितासंभवात्। न चासतोपि साधकत्वे शुक्तिरूप्यादेरपि कटकाद्यर्थक्रियाकारित्वाप- त्तिरिति वाच्यं। परमार्थसत्त्वेन त्वदभ्युपगतस्वाप्निकरजतादेरपि तदापत्तिसाम्यादित्यन्यत्र विस्तरः। यत्त्वसतः साधकत्वे धूमाभा- वादेरपि साधकत्वप्रसंङ्गः। अथ धूमाभावस्यासाधकता नासत्त्वात् किन्तु व्याप्यत्वाभावात् बहुलोर्ध्वतादिवत् आभासविविक्तस्यापि व्याप्त्युपयोगादिति मन्येत तदा वक्तव्यं किमेवं लोकानामनुभवा- त्कल्प्यते उतासतोपि साधकत्वाभिमानात्। न प्रथमः। तदभावात् तार्किकाहि महाह्रदोऽग्निमान् धूमवत्त्वादित्युक्ते असिद्धिमुद्भावयन्ति न द्वितीयः निर्मूलत्वादिति। तदसत्। धूमाभावस्यापि साधकत्वप्रसंग इत्यत्र साधकत्वं न सिद्धिजनकत्वं लिङ्गकारणतावादे इष्टापत्तेः। मता न्तरेतु आपादकाभावः। त्वन्मते पारमार्थिकस्यापि धूमादेः न सि- द्धिजनकत्वमिष्यते। क्वचित् सिद्धिजनकज्ञानविषयतारूपं च तवापीष्टं। अतस्सिद्धिजनकप्रमाविषयत्वरूपं साधकत्वं। प्रमाच तद्वति तत्प्रका- रकज्ञानं तथाच मन्मते सन्मात्रस्य तादृशप्रमाविषयत्वं नास्तीति। अस्मन्मते तु तदापत्तिरिति चेन्न। मन्मते तत्राव्याप्त्यभावेन तदप्र- संगात्। तद्व्याप्तिरपि आरोपिता सुलभेति वाच्यं। अतीन्द्रियव- स्तुघटितायाः तस्या अतीन्द्रियतया परोक्षेऽन्यथाख्यात्यभ्युपगमेनो- क्तस्थलीयपरामर्शस्य प्रमात्वासंप्रतिपत्तेः। नचैवमपि वह्निसाधकत्वेनो पन्यस्तो धूमोपि आभासस्स्यादिति वाच्यं। आभासविविक्तधूम- स्याभासत्वकारणाभावेन अतादृशस्य तथात्वे इष्टापत्तेः बहुलोर्ध्व- तादेरिव आभासाविवेकस्य व्याप्त्युपयोगो न युक्तः। लौकिकानां वा व्याप्तिग्रहे तदुपयोगदर्शनादिति चेन्न। एवं सति बहुलोर्ध्वता- दिविशिष्टस्यापि धूमस्य वह्निं विना क्वचित्स्वप्ने अनुभूयमानतया स्वाप्निकपदार्थसत्यतावादिनस्तव मतेपि वह्निसाधकत्वेनोपन्यस्तस्य

बहुलोर्ध्वत्वादिविशिष्टस्य धूमस्याभासतापत्तेर्दुर्वारत्वात् । वासनाम यान्यत्वविशेषणस्य च आभासविवेकसमानयोगक्षेमत्वात् । तस्मादपरीक्षकव्यवहारानुसारेण परीक्षकव्यवहारोपि न व्यवस्थापनीयः किंतु परीक्षकव्यवहारानुसारेणैवेति सर्वमनवद्यं । यद्यप्याभासविवेकस्य व्याप्त्युपयोगित्वंपि आरोपिताभासविविक्तधूमवति ह्रदे व्यभिचारो दुर्वारः आभासविविक्त एवाभासविवेको व्यक्तस्त उपयोगीति चेत् आभासविवेकवतोप्याभासविविक्तस्य तस्यारोपितस्य तत्र वक्तुं शक्यत्वात् व्यभिचारापरिहारात् । आभासविवेकविशेषणीभूताभासविवेकेनापि आभासविविक्तेन भाव्यमिति चेत् । एवं तस्याभासविवेकविशेषणपरंपरायाः अपर्यवसितत्वेन जन्मशतेन हेतुरनिरूपणीयः स्यात् । किंच ह्रदेन धूममात्रं नान्यदस्ति तद्गतबाष्पस्य तदाप्रतीतिरेव नच भ्रान्त्यनुसारेणार्थाङ्गीकारो युक्तः । भ्रान्तेः प्रमाणत्वापातात् । न चास्माभिःधूमवत्तया प्रतीयमानत्वं हेतूकृतं । किन्तु धूमवत्त्वं ततो नाभासविवेको जात्युपयोगी । किंचारोपितदृश्यत्वस्य ब्रह्मण्यसंभवात् दृश्यत्वेपि व्याप्त्युपयोगितयैव आभासविवेकोऽङ्गीकार्य इति तदप्यसत् । आभासविविक्तत्वस्य ब्रह्मविषयकज्ञानाबाध्यत्वरूपतया चक्षुराद्ययोग्यज्ञानादिघटितधर्मावच्छिन्नप्रतियोगिताकत्वेन तदयोग्यत्वात् । अपरोक्षारोपासंभवेन परोक्षरूपे अन्यथाख्यातेरेव स्वीकारेणाभासे तद्विवेकस्याप्यारोपितस्याभावात् । यदिच लाघवात् व्यावहारिकत्वं अखण्डोपाधिरूपं वा । तथापि तस्य प्रात्यक्षिकारोपो संप्रतिपन्न एव । नचैवं इदं रजतमित्यादावन्यथाख्यातिरेवास्त्विति वाच्यं । इदं रजतत्वेन साक्षात्करोमीति प्रत्ययानुरोधेन रजतसाक्षात्काराभ्युपगमस्यावश्यकतया विषयोत्पत्त्यभ्युपगमात् ह्रदे न धूममात्रमसदिति असत्ख्यातिनिरसनतया अन्यथाख्यात्यनभ्युपगमेन चायुक्तं । एवं ब्रह्मणि दृश्यत्वारोपे हि अन्यथाख्यातिरेव नानिर्वचनीयख्यातिः परोक्षभ्रमत्वादिति संप्रदायः ।

परोक्षेऽन्यथाख्यात्यस्वीकारेपि न क्षतिः। आभासविवेकस्य ब्रह्मज्ञानेतरबाध्यत्वावच्छिन्नप्रतियोगिताकभेदरूपस्य वा व्यावहारिकत्वात्मकाखण्डोपाधिरूपावच्छिन्नप्रतियोगिताकस्य वा प्रातिभासिकव्यक्तेः स्वरूपत एव वह्निव्याप्यतावच्छेदकघटकतया व्यभिचारानवकाशात्। नच तस्याप्यारोपितस्याभासे असति संभव इति व्यभिचारतादवस्थ्यमिति वाच्यं। अन्यत्र सत एव तस्यान्यत्रारोपे अन्यथा ख्यात्यापत्तेः। व्यावहारिकस्य तस्य पल्लवाविद्यापरिणामित्वानुपपत्तेश्च। अधिष्ठानज्ञानेन तन्निवृत्तौ व्यावहारिकेऽपि तदभावापत्तेश्च। किन्तु तादृशमर्थान्तरमेव तत्रावभासत इति वाच्यं। तथाच यस्य व्याप्यतावच्छेदकानुप्रवेशः तस्याभाससाधारण्याभावात् न व्यभिचारः। वियदत्यन्ताभावादेरपि स्वरूपतो भानं तार्किकादिभिस्तत्रतत्रोक्तं। तद्व्यक्तित्वादीनामुक्ताभावस्य व्याप्यतावच्छेदकघटकत्वेनोक्ताखण्डोपाधौ प्रमाणाभावः उक्तव्यवस्थाया एवान्ततः प्रमाणत्वात्। न चानिर्वाच्यख्यातिमेव परित्यज्योक्तव्यवस्थानिर्वाह इति वाच्यं। अनिर्वाच्यख्यातिसाधकलाघवानुरोधेनैकस्याखण्डोपाधेः कल्पयितुमुचितत्वात्। परोक्षेऽन्यथाख्यात्यनभ्युपगमे लाघवादसत्त्वे च अन्यथाख्यातेरेवाभ्युपेयतया संप्रदायोक्तरीतेरेवाश्रयणीयत्वाच्च। ब्रह्मण्यारोपितं दृश्यत्वमादाय तत्र व्यभिचारस्त्वाभासविवेकोपादानादेव वारणीयः। न चाभासविवेको ब्रह्मज्ञानबाध्यत्वमिति पक्षे ब्रह्मणि आरोपितदृश्यत्वे तदप्रत्यूहमिति व्यभिचारस्तदवस्थ इति वाच्यं। ब्रह्मादिपयकज्ञानबाध्यभेदज्ञानस्योक्तरूपतया तस्य स्वरूपतः तद्व्यक्तित्वेन वा निवेशेन व्यभिचारस्य निरसनीयत्वात्। यद्वा शुद्धब्रह्मातिरिक्तं सर्वं प्रमेयमित्याकारक यत्किंचिद्धीव्यक्तिं विशिष्योपादाय तद्धीविशेष्यत्वमेव हेतूकर्तव्यं ब्रह्मण्यारोपितं तद्धीविषयत्वं प्रातिभासिकं नैतद्धीनिरूपितं एतद्बुद्ध्यनिरूपितायां विषयतायामारोप्यमाणधीव्यक्तेः प्रातिभासिकत्वेनैतद्धीनिरूपितत्व-

संभवात् । अनुगतधर्मानभ्युपगमेन प्रत्यवस्थानं तु तत्साधनेनैव निरसनीयं । तत्साधनप्रकारश्चान्यत्र निरसनीय इत्याहुः । न च घटस्सन्नित्याद्यक्षबाधः उक्तमिथ्यात्वविरोधिनस्सत्यत्वस्य तादृशप्रतियोगित्वाभावः । तद्भेदादिरूपस्य योग्यानुपलब्धिविरहेण प्रत्यक्षायोग्यत्वात् । प्रतियोगिस्मरणसहकृतधर्मिप्रत्यक्षमात्रेणाभावसाक्षात्काराभ्युपगमे स्तंभः पिशाचसंयोगी नेत्यपि प्रत्यक्षापत्तेः । कालसंबन्धित्वादिरूपस्य च तस्य मिथ्यात्वाविरोधित्वात् । केनचिद्रूपेणाभावग्रहेपि रूपान्तरावच्छिन्नोक्तप्रतियोगितासाधारणरूपावच्छिन्नवत्ता बुद्धाव विरोधित्वाच्च । विश्वं सत्यमित्यादिश्रुतेरन्यपरतया विश्वसत्यतायामतात्पर्यात् । देवताधिकरणन्यायस्य च प्रमाणान्तराविरोधे सत्येव प्रवृत्तेः । विस्तरस्तु श्रुतिमतोद्योतटीकायामनुसन्धेयः। विश्वं सत्यं दृश्यत्वादात्मवदित्यपि प्रयोज्यत्वात् प्रकरणसम इत्यपि न सत् । शुक्तिरूप्यादावनैकान्त्यात् । रजतं दृष्टमित्यस्य भ्रममात्रत्वेपि तस्य ज्ञेयत्वानपायाच्च । असत्ख्यात्यनभ्युपगमेऽपसिद्धान्तश्च । यत्तु तज्ज्ञानजनककरणसन्निकर्षाश्रयत्वं जन्यतदज्ञानविषयत्वमत्राभिहितं । तच्च नास्ति दोषवशात् तस्य भाने तद्गतेन्द्रियसन्निकर्षानपेक्षणादुल्लेख्यता रूपविषयतायास्तत्राभ्यूहत्वाच्च नापसिद्धान्त इति। तन्न। अनुमित्यादौसादेरविषयत्वापातात् । नीलो घट इत्यादौ शाब्दबोधे गगनसन्निकृष्टशब्दादिजन्ये गगनादेरपि विषयतावारणाय यत्सान्निकर्षसहकृतेन करणेन यज्ज्ञानं जन्यत इत्यादिरीत्यापि विवक्षायाआवश्यकत्वात् लिङ्गिलिङ्गसन्निकर्षस्यातद्धेतुत्वात् । यदि च सहकारित्वं तज्जन्य कार्यप्रयोजकतारूपं कारणतावच्छेदकरूपसाधारणं निवेश्यते तदाव्याप्त्यादेरप्यनुमितिविषयत्वापत्तिः । उल्लेख्यतारूपविषयताया एव सर्वत्राभ्युपगमसंभवेन तज्जन्यज्ञाने विषयतान्तरकल्पने प्रयोजनाभावाच्च । विषयतानिरूपकसन्निकर्षस्यासत्यपि सम्भवेन जगदसद्विलक्षणमित्याद्यनुमितौ असतो विषयताया दुर्वारत्वाच्च। साध्यतावच्छेद-

कादिव्यावृत्तविषयताया एव तथात्वस्य विवक्षणे अनुमित्यादौ वह्नित्वादेरविषयत्वापाताच्च। नृशृङ्गं गगनादिविलक्षणं प्रमाणाविषयत्वादित्याद्यनुमितिविषयताया अव्यावर्तनाच्च। वाद्यभिमतहेत्वतिरिक्तस्य हेत्वादेः प्रकरणसमत्वाभिधानविरोधः। हेत्वैक्य एव त्वया तस्य परिभाषितत्वात्। अन्यथा प्रतिसाधने पौनरुक्त्यापत्तेः। विमतं सत्यं प्रमाणदृष्टत्वात् आत्मवदिति प्रतिसाधनं इत्यप्यशुद्धं। असन्नृशृङ्गमिति प्रमाणदृष्टे असति व्यभिचारि। सदसदुभयाविषयकप्रमाणदृष्टत्वं च शशीयं शृंगमिति प्रतीतिविषये व्यभिचारि। प्रमाणेन प्रकारत्वमिति चेन्न। सर्वं वियदादिज्ञानं अधिष्ठानाविषयकमिति वदन्तं तं मायावादिनं प्रतियोगे युक्तं। उक्तविधानप्रसिद्ध्या हेत्वप्रसिद्धे दुर्वारत्वात्। असदविषयकप्रमाणदृष्टत्वं तु असत्त्वोक्तसाध्यरूपत्वे जगति संदिग्धासिद्धं। सत्तादात्म्यशून्यत्वरूपत्वे मां प्रतियोगे शुक्तिरूप्यादौ व्यभिचारि। उक्तरीत्या शुक्तिरूप्यादौ साध्यसाधनोभयसंप्रतिपत्ते र्नदृष्टान्तः साधनविकलश्चेति। नच प्रमाणविरुद्धत्वमुपाधिः। तस्य पक्षेसंदिग्धतया हेतौ व्यभिचारस्य पक्षे साध्यव्यावर्तकधर्मवत्त्वस्य चानिश्चयादुपाधिसंशयात् व्यभिचारसंशयः सम्भाव्यमानोपि दृग्दृश्यसंबन्धानुपपत्त्यादिरूपाणां तर्काणां जागरूकत्वात् न प्रकृतानुमितिविरोधि। ननु कथं दृग्दृश्यसंबन्धानुपपत्तिः। नच दृश्ये ईदृशस्संयोगस्तावत् न भवति। तस्य द्रव्यमात्रवृत्तित्वात्। द्रव्यस्यापि दृश्यसत्त्वात्। नापि समवायः। अनभ्युपगमात्। अभावादौ दृश्ये तदतिरिक्तस्यैव विषयतारूपसंबन्धस्याभ्युपगमसंभवात्। नच प्रकाशस्य प्रकाश्यनिष्ठः प्रकाशत्वातिरिक्तसंबन्धः। एवं प्रकाशस्य तादृशसंबन्धप्रकाशकल्पने प्रमाणाभावात्। अन्यथा आलोकादेः स्वासंबद्धार्थप्रकाशकत्वापत्तेरिति वाच्यं। आलोकादिस्थले तद्दर्शनेपि ज्ञानप्रकाशस्य तादृशसंबन्धप्रकाशकल्पने प्रमाणाभावात्। किञ्च दृश्यत्वनियामकसंबन्धान्तरं वाच्यमिति त्वयोच्यते। यच्चोक्तं

नच दृक्संबन्धमात्रेण दृश्यत्वमिति युज्यते। अतिप्रसंगादिति। तदप्ययुक्तं। तथाहि। तस्यापि नियामकं कल्प्यं एवं तस्यापीति अनवस्थानात्। नच तत्परिहारार्थं कश्चित् स्वनिर्वाहकस्वभाव एव नियामकः मद्दृश्युन्नेय इति वाच्यं। तथाचादावेव तथास्तु लाघवात्। नचैवं स्वभाववादः। बहुधान्वेषणेपि नियामकान्तरालाभे स्वभावस्वीकरणात्। प्रकृते च वास्तवसंबन्धस्यैव भवतैव निराकरणात् तदभावस्तावत्सिद्धः। आध्यासिकसंबन्धोपि स्वस्य दृश्यतानिर्वाहार्थमाध्यासिकसंबन्धान्तरमपेक्षते। एवं तदपि संबन्धान्तरमपेक्षत इत्यनवस्थानियामकः। किञ्चाध्यासिकसंबन्ध इति कोर्थः। कश्चित्संबन्ध एवाध्यस्त इति किंवा दृश्यस्य दृगध्यस्तत्वं नाम कश्चित्संबन्ध इति। आद्ये सम्बंधमात्रस्यैव मिथ्यात्वं लब्धं न दृश्यवर्गस्येति तवाभिमतासिद्धिः। न द्वितीयः दृष्टे दृश्यत्वनिर्वाहार्थं कल्पने दृष्टावनेकपदार्थहानिप्रसंगेन तस्याकल्पनीयत्वात्। न ह्यल्पस्य हेतोः बहुत्यागो युक्त इति। अथवास्तु कश्चित् दृग्दृश्ययोः संबन्धः स च न संबन्धिभ्यां भिद्यते। येन संबन्धिभिन्नसंबन्धस्य संबन्धिना संबन्धान्तरमंगीकार्यं तस्य तस्यापीत्यनवस्था स्यात्। नचैवं सम्बन्धाभावप्रसंगः। ज्ञानाभेदमात्रेणानन्दाभावप्रसङ्गेण मोक्षस्याप्यपुरुषार्थत्वप्रसंगात्। अस्मन्मते अभेदे हि विशेषबलात् एकांशपरिशेषाभावोऽन्यत्रोपपादित इति चेन्मैवं। दृग्विषयताया विप्रकृष्टसंबन्धिद्वयनिरूप्यत्वेन पारमार्थिकत्वानुपपत्तिरेव दृग्दृश्यसंबन्धानुपपत्तिः। सा च प्रकृतेऽप्रत्यूहेति दृश्यत्वनिर्वाहकसंबन्धान्तरस्यानभ्युपगमेपि क्षत्यभावात्। आध्यासिकसंबन्ध इत्यस्यान्यानिर्वाच्यसंबन्ध इत्यर्थः। नचैवं दृश्यमानानिर्वाच्याप्रसिद्धिः। वेदाद्यनिर्वाच्यत्वेन विना संबन्धानिर्वाच्यत्वस्यैवानिर्वाहात् अनिर्वाच्यस्य हि कदाचिदुच्छेदहानिर्वाच्यत्वं वाच्यं। नित्यानुवृत्तौ तस्य पारमार्थिकत्वापत्तेः यौक्तिकबाधः तदा अनिर्वाच्यताव्यापकोपि न तदुच्छेदकः। सत्य-

पि तस्मिन् तदुच्छेदादर्शनात् । नच पूर्वपूर्वानिर्वा च्यबाधकज्ञानोत्तरं तदुच्छेदेपि विद्यमानकारणान्तरेण संबन्धान्तरोत्पत्तिरास्तामिति वाच्यं। अज्ञानं विना कारणान्तरस्य दुर्वचत्वात् । तस्यानित्यप्रमाविषयत्वे तस्यापि विषयत्वस्यानिर्वाच्यतैव वाच्या । प्राङ्निषेधस्याज्ञानस्य सत्त्वायोगात् । विषयतायाः प्रमायाः प्रागसत्त्वेन निराश्रयता स्यात् । परमनित्येपि विषये द्रष्टव्यं । न चातीतादिनिष्ठज्ञानाविषयतावदस्य अज्ञानविषयतापि भाविन्युपपद्यत इति वाच्यं । तादृशविषयत्वादीनामनिर्वाच्यत्वं विनानुपपत्तेः। नच तादृशसंबन्धाभावविशिष्टप्रमावच्छिन्नातीतविषयकमेवाज्ञानं तादृग्विषयतावच्छिन्नचिदाश्रितं वेति नानुपपत्तिरिति वाच्यं । एतादृशसंबन्धाभावविशिष्टप्रमावच्छिन्नात्मविषयकपरोक्षज्ञानेपि तदनिर्वृत्तेः । न चापरोक्षज्ञानमेव तन्निवर्तकं तादृशप्रमाव्यक्तिनाशोत्तरं तद्विशिष्टात्मसाक्षात्कारायोगात् । परोक्षज्ञानेनापि तन्निवृत्तिरज्ञाननिवृत्तिद्वारैव वाच्या । तथाच जन्यतत्तत्प्रमाभेदभिन्नाज्ञानजन्यतत्तद्विषयभिन्नाज्ञानतादृशसंबन्धादिकल्पने गौरवात् । लाघवात् यदाध्यासेनैव तदानिर्वाच्यत्वोपपादनं युक्तमिति दृग्दृश्यसंबन्धानिर्वाच्यत्वस्य निखिलदृश्यानिर्वाच्यत्वोपपाद्यत्वमप्रत्यूहं । नच शुद्धब्रह्मज्ञानमेव विषयतानिवर्तकं। तच्च सर्वमुक्तिपक्षे चरमतत्वज्ञानानाश्यमिति स्वीकारे न गौरवावकाश इति वाच्यं। सर्वमुक्त्यनन्तरं विषयानुवृत्तौ प्रमाणाभावे विषयोच्छेदकस्यापि औचित्यावर्जिततया दृश्यानिर्वाच्यत्वस्यासिद्धत्वात्। अनिर्वाच्यत्वोपहितस्यापि अनिर्वाच्यतया दृग्विषयत्वोपहितस्य वियदादेरनिर्वाच्यतायाः आवश्यकत्वेन तदनुपहितवियदादिस्वरूपस्यापि कल्पने गौरवाच्च । दृशि तु तादृशं रूपं श्रुतियुक्त्यादिसिद्धं। अन्यथा वियदाद्यनिर्वाच्यत्वानिर्वाह इति विवेचितं अधिकमन्यत्र। दृष्टदृश्यत्व इत्यादि युक्तमित्यन्तमपि न युक्तं । तदुपादानस्य प्रकारान्तरेणासंभवे त्यागस्यावर्जनीयत्वात् । तदधिकसंख्याकानिर्वा-

च्यवस्तुकल्पनाय हि एतत्कल्पना । तदनिर्वाच्यत्वकल्पनाया एव न्याय्यत्वात् । अन्यथा भ्रममात्रस्योच्छेदप्रसंगात् । विशेषस्य स्वरूपद्वयनिरूप्यत्वेऽतिरिक्तविषयतापर्यवसानं स्वरूपैक्ये ज्ञानस्वरूपमेव विषयतेति पक्षान्तरभाव इति पक्षद्वयेपि विप्रकृष्टद्वयसंबन्धद्वयनिरूप्यत्वादनिर्वाच्यत्वमप्रत्यूहं । द्वितीये च इमे रंगरजते इति प्रमाया अपि भ्रमत्वापत्तिरप्याधिकेति संक्षेपः । ननु कोसौ संबन्धो विप्रकर्षः । उच्यते एकसंबन्धिनिष्ठकालिकसंबन्धावच्छिन्नसंबन्ध्यन्तरावच्छेदकाधिकरणतावच्छेदकत्वसंबन्ध्यन्तरावच्छेद्यकालिक संबन्धावच्छिन्नाधिकरणत्वप्रतियोगित्व अन्यतरत्वावच्छिन्नाभावः । अस्ति चेदं संयोगसमवायादिस्थले वृत्त्यनियामकः संयोगःपक्षकुक्षिनिक्षिप्तः। वस्तुतः तत्रापि प्राचीत्वादिरूपेण संबन्ध्यन्तरं संबन्ध्यन्तरीयतादृशाधिकरणतायामवच्छेदकमिति न कोपि दोषः । एतेन संयोग एव ज्ञानविषययोः संबन्धद्वयस्य संयोग इति परिभाषायाः प्रमाणेन वस्तुसिद्धावनादरणीयत्वादिति । किञ्च गुणगुणिनोः संबन्धानुपपत्तौ संयोग इव दृश्ययोस्संबन्धः संबन्धद्वयानुपपत्तौ अन्य एव वास्तवसंबन्धः किं न कल्पनीयः । किञ्च मिथ्यात्वेपि कथं दृश्यत्वं गगन इव गन्धर्वनगरस्य दृशि प्रपञ्चस्यारोपितत्वादिति चेत् । सर्वं सर्वेण दृश्येन वा केनापि किञ्चिदिन्द्रियसन्निकर्षादिति तन्नियामकमिति चेत् तर्हि किमनारोपितत्वेन कारणसंबन्धादिनिबन्धनो विषयाभावस्तु दृग्दृश्ययोः संबन्ध इति परास्तं । संबन्धिविप्रकर्षे तस्यापि अनिर्वाच्यतानपायात् । यत्तु प्रमायां गुणत्वेपि विषयेण संयोगो युज्यत एव । तथाहि गुणे तावत् क्रियाङ्गीकार्या । घटेगच्छतितद्रूपेपि गतिदर्शनात् । घटगता सा रूपेपि प्रतीयत इति चेत् विपरीतं किं न स्यात् पटावयवतन्तुगता गतिः पटेपि प्रतीयत इति वक्तुं शक्यत्वात् अतिप्रसङ्गाच्च । गच्छत्पटनिष्ठे महारञ्जनादिद्रव्ये गतिरस्ति न वा । नचेन्महारञ्जनस्य देशान्तरेण सं-

योगो न स्यात्। असमवायिकारणाभावात्। नच पटनिष्ठक्रियादि समवायिकारणं। कार्यैकार्थप्रत्यासत्तेः कारणैकप्रत्यासत्तेश्च अभावेन तस्य समवायिकारणप्रत्यासत्त्यभावात्। नापि पटस्य देशान्तरसंयोगः देशान्तरेणाप्यस्य संयोगानन्तरं महारञ्जनेन देशान्तरेण सह संयोगस्य प्रतीतिप्रसङ्गात् तन्तोर्देशान्तरसंयोगादेव पटदेशान्तरसंयोगसिद्धौ पटे क्रियाभावप्रसंगाच्च। नच क्रियावता पटेन हि रञ्जनस्य संयोगः। तदसमवायिकारणक्रियाहीनमहारञ्जनस्य द्रव्यस्य क्रियावता पटेन सह संयोगानुपपत्तेः। क्रियावत्त्वं संयोगस्य संयोगप्रतियोगिनीं क्रियामुत्पाद्य तन्निष्ठक्रियाद्वारैव तस्य देशान्तरसंयोगोत्पादकतानियमेन महारञ्जने गतिस्वीकारावश्यकत्वाच्च। तस्मा च पटनिष्ठमहारञ्जने गतिरस्तीति पक्ष एवाश्रयणीयः। एवं मद्रीत्या रूपान्तरादावपि क्रियासिद्धिः। अनुभवस्याविशेषात्। एवं गुणे गुणोप्यंगीकार्यः। चतुर्विंशतिगुणा इति गुणेपि संख्यादिप्रतीतेः। यद्यपि गुणे च संयुक्तादिव्यवहारः। द्रव्ययोरेव संयोग इति दर्शनाभ्यासवान्न जनोङ्गीकरोति। तथापि घटपटयोस्संयुक्तयोः तद्गते पि रूपे संयुक्त इति लोकः करोत्येव व्यवहारं। किञ्च रूपेण युक्तः घट इति सर्वे व्यवहरन्ति। तथापि संयुक्तइति न व्यवहरन्ति चेत् ध्वंसशब्दयोरिवार्थयोरर्थभेदास्फुरणात्। द्रव्याणां कर्मसंयोग इत्यादौ जैमिन्यादिभिः परीक्षकैः अद्रव्यसंबन्धेपि संयोगव्यवहाराच्च। तथाच ज्ञानस्य गुणत्वे विषयेण गुणात्मकसंबन्धः। नच ज्ञाने संयोगासमवायिकारणाक्रियाभावात् संयोगानुपपत्तिः। रूपादौ क्रियासाधनप्रकारेण ज्ञानेपि तत्साधनात्। नन्वतीतेन विषयेण कथं संयोग इति चेत् किमतीतादौ संबन्धमात्रं न स्वीक्रियते उत संयोग एव। नाद्यः। संबन्धाभावस्यापि अतीतसंबन्धाभावप्रसंगात्। प्रध्वंसादेरतीतसंबन्धित्वाभावप्रसंगाच्च। न द्वितीयः तद्वत्संयोगस्याप्युपपत्तेः। न चास्माभिः संयोगो द्विनिष्ठ इति स्वी-

क्रियते। एकविषयलक्षणाश्रयाभावे कथं तदाश्रयतत्संयोगोपि द्विनि- ष्ठ इति बोध्येत। किं नाम सादृश्यादिवत् एकाश्रितोऽन्यनिरूप्य इति संयोग इत्यबाधितव्यवहारास्पदत्वं संयोगलक्षणं। न चैवमन्योन्या- श्रयः पूर्वपूर्ववृद्धव्यवहारविषयत्वेनोत्तरोत्तरव्यवहारोपपत्तेः। मन्त्र- इत्याद्यभियुक्तप्रसिद्धत्वं मन्त्रलक्षणमिति मीमांसकैः स्वीकाराच्च। किञ्चेदमंशावच्छिन्नचैतन्ये रजतमध्यस्तमविद्यावृत्तिप्रतिबिम्बितसा- क्षिचैतन्येन तु दृश्यते। एवंच यत्राध्यस्तं न तेन दृश्यं। दृश्यं येन च दृश्यं न तत्राध्यस्तं। अपिच नित्यानुमेयविषयत्वस्य वृत्तिज्ञाने ऽध्यासः त्वयापि नाङ्गीक्रियते। तथापि नित्यानुमेयं दृश्यमित्यङ्गी- कार्यं। अन्यथा हेतोर्भागासिद्धिप्रसङ्गादिति न दृगध्यस्तत्वं दृश्यत्व- प्रयोजकं। किञ्च यदि दृश्यं दृगध्यस्तं स्यात् तदा दृग्घटइति तदनु- विद्धतया प्रतीयेत नच दृशि दृक्त्वादन्यः सामान्याकारोस्ति। तद- सत् प्रवेशादिव्यवहारवत् संयोगादिव्यवहारस्यासाधारण्येपि परा- मृश्यत्वाद्यभिन्नकारणतावच्छेदकशरीरे संशयान्यत्वादीनां न मुख्यप्रवे- शः। एवं रूपादीनां स्वाश्रयघटादौ न मुख्यः संयोगःकारणबाधा- त्। तत्रैकतरक्रियां विनापि घटादौ रूपादिसंबन्धोऽभ्युपगम्यते। नाप्ययं संयोगजसंयोग इति सांप्रतं। कपालनीलादितो घटादि- नीलस्य विलक्षणतयानुभूयमानत्वात्। घटत्वादिस्थले गत्यभावाच्च संयोगो न युक्तः। घट इत्यादिव्यवहारानुरोधेन संयोगस्यापि सं- योग एव संबन्ध इत्युक्तानवस्थापत्तेः। संयोगस्य सर्वस्य स्वयमेव संबन्ध इति चेत् संबन्धः किं धर्मिणा संबध्नाति उत न। नाद्यः अति- प्रसङ्गात्। न द्वितीयः। तर्हि संबन्धो वाच्यः ननु स्वनिष्ठप्रतियोगि- त्वं घटादिनिष्ठानुयोगित्वं चोपेयत इति चेत् तर्ह्यनुयोगितायुक्तो घट इत्यादिप्रतीतेः कावा गतिः। तत्रापि संयोगान्तरस्वीकारेऽन- वस्थापत्तेः। अनुयोगितापि सर्वस्य स्वयमेव संबन्ध इति चेत् त- द्युक्त इति व्यवहारस्य का गतिः। तत्रापि संयोस्तीति चेत् तर्हि

संबन्धमात्रं संयोग इत्यापातितं । तथाच घटसंयुक्तं भूतलं घटीयोऽभाव इत्यादिप्रत्यये त्वत्रश्यं सिद्धं वैलक्षण्यं भज्येत । नच तत्र वैलक्षण्यस्य च प्रामाणिकत्वेपि रूपवद्भूतलं घटवद्भूतलमित्यादौ संबन्धांशे वैलक्षण्यमप्रामाणिकमिति वाच्यं । एवं सति त्वन्मते गुणगुणिनोरभेदः घटभूतलयोस्संयोग इत्याद्यभ्युपगमानुपपत्तेः । एवंच गुणगुण्यंशे संबन्धस्य संयोगाद्वैलक्षण्यं दुरपह्नवं । अपिच रूपादावप्येकत्वं तत्राप्येकत्वमिति परंपरायाः रूपादिगतैकत्वादिगतैकत्वादौ संयुक्त इति व्यवहारात् निश्चलघटरूपादिगतैकत्वादिगतैकत्वादौ कथं संयोगः हेत्वभावात् । संबन्धान्तरवत् सोपि भवतीति चेन्न । व्यापकविरोधोपलब्धेः लोकेपि संयोगः कारणद्वयान्योन्यदृष्टः । संयुक्तव्यवहारस्तु प्रवेशादेः व्यवहारवत् गौणोपि संभवतीत्युक्तं । रूपादिकं चलतीति प्रत्ययस्तु न केनाप्यभ्युपगतः त्वत्प्रलापमात्रेण दूरीकर्तुं युक्तः । क्रियां प्रति द्रव्यन्वेनोपादानत्वं स्वीकृत्यानेककोटिगुणादिष्वनुभवविरुद्धक्रियाद्युत्पत्तिवारणसंभवे ऽनुभवविरुद्धगौरवाभ्युपगमो न युक्तः । महारञ्जनन्तु द्रव्यं अतीतादरज्ञानादेश्च संयोगः सुतरामयुक्तः । मुख्यसंयोगे विप्रकृष्टसंबन्धिनिरूप्यत्वदर्शनात् । किञ्च सेनया युक्तः राजा गच्छतीत्यादौ सेनासंबन्धस्य संयोगादिरूपत्वे सेनान्तर्गतचण्डालस्पर्शापत्त्या तद्गतस्यप्रायश्चित्तं स्यात् । सरटसंयुक्ते त्वक्संयोगस्यावश्यकत्वात् त्वक्स्पर्शनाभावहेतोर्दुर्निरूपत्वाच्च । किञ्चेत्यादिकमपि न युक्तं । आध्यासिकसंबन्धस्यानिर्वाच्यसंबन्ध इत्युक्तत्वात् । दृग्घट इति प्रतीयेतेति नैव युक्तः ; इष्टापत्तेः । दृगात्मकस्य सतः सन्घटइत्यादौ भानात् । न भानान्तरं । सन्घट इत्यभिलापवत् दृग्घट इत्यभिलापापत्तेः तादृशप्रत्यये दृक्त्वेन सतोऽभानात् । नच पृथक् सत्त्वादिकं न देशातिरिक्तमिति तद्भाने तद्भानात्कथं नोक्तदोष इति वाच्यं । विषयानुभावत्वादिति रूपदृक्त्वस्य अबाध्यत्वोपलक्षिते स्वरूपात्मकसत्त्वातो भेदस्याविद्याकस्या-

भ्युपगमात्। उक्तं च पञ्चपादिकायां आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः। अपृथक्त्वेपि चैतन्यात् पृथगिवावभास्यत इत्येपादिक्। एवंच गुणादावतीतादौ च संयोगसंभवात् साक्षात्संबन्धस्य प्रकृष्टसंबन्धकत्वनैयत्याच्च संबन्धतोपि तस्यानिर्वाच्यत्वमादर्शकं परं परासंबन्धनिरासश्च अन्यत्र प्रपञ्चितमिति सर्वं चतुरश्रम्। इति भट्टत्र्यम्बकस्य कृतिषु श्रुतिमतानुमानोपपत्तिः ॥

॥ सम्पूर्णम् ॥

श्रीगणेशाय नमः ॥

पूर्णानन्दाय निर्भेदपरमानन्दरूपिणे ।
व्यासशङ्कररूपाय श्रीपरब्रह्मणे नमः ॥
पूर्णानन्दाय सत्यानामपि सत्याय शम्भवे ।
निर्दोषज्ञानरूपाय नमोऽनन्ताय विष्णवे ॥

तत्वज्ञानस्य निखिलपुरुषार्थसाधनत्वात् तत्वं निरूप्यते । अबाध्यार्थः तत्त्वं अबाध्यत्वं च स्वसंसर्गिनिष्ठव्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वं । न चात्यन्तासतोपि तत्वरूपतापत्तिः । कालसंबन्धित्वेनापि विशेषणीयत्वात् । नच शुक्तिदशायां कालसंबन्धाभावादात्मनः तत्वरूपता न स्यादिति वाच्यं । कालसंबन्धोपलक्षितनिष्ठाबाध्यताया एव तत्वपदप्रवृत्तिनिमित्तत्वात् । यत्तु अनारोपिस्वरूपं तत्वं। नच कूर्मरोमादौ अन्यत्रानारोपिते तुच्छेऽतिव्याप्तिः । प्रतीतौ सत्यामित्यस्यापि वाच्यत्वात् । इदमेव च स्वतन्त्रं परतन्त्रं च प्रमेयं द्विविधं मतमित्यत्र प्रमेयपदेन सूचितं तत्वलक्षणं । प्रतीतौ सत्यामनारोपितमित्यनेन आरोपान्यप्रतीतिविषयत्वलाभात् नचेश्वरज्ञानाविषयतामादायातिव्याप्तिः । तस्य सर्वविषयकत्वानुरोधेनासद्विषयकभ्रमविषयकत्वस्यावश्यकत्वादिति वाच्यं । सत्त्वप्रकारकयथार्थज्ञानविषयतायाः विवक्षितत्वादिति । तदसत् । सत्यत्वस्य तत्वमात्रसाधारणस्यानतिप्रसक्तस्यावश्यं निवेशनीयतया तस्यैव लक्षणत्वसंभवे इतरांशवैयर्थ्यात् । धर्मिभेदेप्यनतिप्रयोजनकत्वस्य दुर्वारत्वाच्च। तत्वमेकमेव "सदेव सौम्येदमग्रआसीत् एकमेवाद्वितीयं" इत्यादिश्रुतिभ्यः । तच्चापरोक्षपूर्णानन्दरूपं परिच्छेदत्रयशून्यं च । "यत्साक्षादपरोक्षाद्ब्रह्म यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् । सत्यं ज्ञानमनन्तं ब्रह्म नेहनानास्ति किञ्चन नात्र का-

चनभिदास्ति । अविनाशीवा अरे अयमात्मा आत्मैवाधस्तात् आत्मैव पुरस्तात्" इत्यादिश्रुतिभ्यः। तदन्यच्च अतत्वं तद्विविधं अनिर्वाच्यं अत्यन्तासच्च । स्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वं स्वसमानाधिकरणाभावप्रतियोगित्वं वाऽनिर्वाच्यत्वं । तुच्छत्वं च सत्तादात्म्यशून्यत्वं तत्र द्वितीयं तुच्छालीकादिशब्दजन्यविकल्पविषयः । आद्यमपि द्विविधं व्यावहारिकं प्रातिभासिकं च । व्यावहारिकत्वं च शुद्धब्रह्मान्यविषयकज्ञानाबाध्यत्वे सति बाध्यत्वं अखण्डोपाधिर्वा ब्रह्मण्यारोपितं क्षणिकत्वादिकमपि क्षणिकत्वाभाववद्ब्रह्मज्ञानबाध्यमेव । तदबाध्यं ब्रह्मैकज्ञानबाध्यं प्रातिभासिकमसिद्धमेव अतो न तत्रातिव्याप्तिः । प्रातिभासिकत्वं च ब्रह्मान्यविषयकज्ञानबाध्यत्वं तत्र व्यावहारिकं प्रकृतिविकृत्युदासीनभेदात् त्रिविधं । तत्र शुद्धा प्रकृतिर्मूलाज्ञानं प्रधानं मायाऽविद्या इत्यादिशब्दवाच्या जगतः प्रागवस्थाविकृतिः चरमविकारमात्रं । यद्वा विकृतित्वं भूतविभाजकोपाधिः बुद्ध्यहङ्कारत्वान्यतररूपेण स्वविजातीयकार्यं प्रत्यप्रकृतित्वे सति विकृतित्वं । तथाच घटादय एव तथा नतु महत्तत्वाहंकाराकाशवायुतेजोजलपृथिव्यः । न चाविरोधिनी भाष्यविरोधः। तत्रेतरेषां चानुपलब्धेरिति सूत्रे महदहंकारादेर्निराकृतत्वादिति वाच्यं। साङ्ख्याभिमतविलक्षणतत्वयोर्निरासेपि भगवदीक्षणसंकल्पयोर्मूलकारणीयसर्गाद्यद्वितीयविकारयोरेव पराशरपुराणे महदादिरूपेण प्रतिपादनात् । अत एव महत्तत्वादिबोधकपुराणाद्यविरोधः । पञ्चकर्मेन्द्रियाणि पञ्चज्ञानेन्द्रियाणि पञ्च प्राणाः अनेति षोडशानां यथायतं प्रकृतिविकृतिषु केवलविकृतिषु वान्तर्भावः। तेषामपि स्वस्य वृत्त्यात्मना परिणामित्वात्। विजातीयकार्यात्मना परिणामाच्च। उदासीनश्च गुणकर्मसामान्यसंख्याविशिष्टोपाहितशक्तिविषयित्वप्रतियोगित्वानुयोगित्वाधारत्वाधेयत्वस्वत्वस्वामित्व भेदतादात्म्यात्यन्तान्योन्याभावभेदात् बहुविधाः । तत्र गुणाः रूपरसगन्धस्पर्शशब्दप-

रिणामपरिमाणसंयोगविभागद्रवत्वस्नेहशब्दकर्मचोत्क्षेपणादि भेदेनाने-
कविधं। सामान्यं च स्वरूपतो भासमानो धर्मः घटत्वविषयतात्वा-
दिः। संख्या एकत्वादिः। इयं च नातिरिक्ता। विषयतायामेवान्त-
र्भाव संभवादित्यपि वदन्ति। शक्तिर्दाहादिजनकतावच्छेदको व-
ह्न्यादिगतो धर्मः। इयं च न सामांतःपातीति अव्याप्यवृत्तित्वात्।
इदमत्रावधेयं। अविद्योपहितस्य मनोवच्छिन्नस्यानादित्वादपरिणा-
मित्वाच्च न प्रकृत्यादिरूपता। एवं प्रतिबिंबादेः बिंबानतिरेके तु
विकृत्यादिकमेव। तमश्छायादिकमपि द्रव्यत्वात् जन्यत्वाच्च। वि
कृतिः प्रकृतिविकृतिर्वा। प्रकृत्यादयो भेदाः द्रव्यस्यैव। रूपादीनामपि
विकृत्यादिव्यपदेशाविषयत्वेऽद्रव्यस्यापि विकृतित्वमुपपाद्यं। द्रव्य-
त्वं च गुणाश्रयत्वं। उत्पन्नविनष्टो घटादिरप्रामाणिक एव। विशि
ष्टोपहितचितामन्यत्वे च विकृतित्वमेव अनन्यत्वे चिद्रूपत्वादात्मतत्व-
रूपतैवेति। उपहितादिरूपाणामचितां तु विकृतित्वमेव तत्रापि द्रव्य-
संबन्धविशिष्टोपहितानां द्रव्यमिव गुणादिसंबन्धिनां तेषां गुणादिकं
प्रकृतिस्स्यादिति तु न। उपहितसामग्र्याश्च उपहितोत्पादकत्वात्।
नव्यास्तु श्रुतिप्रतिपन्नजीवब्रह्मैक्यप्रत्यक्षयोरनुरोधेन अविद्यादिरूपो-
पाधेराश्रयभेदकत्वोपगमेपि नोपाध्यन्तरेण स्वाश्रयभेदः मानाभावा-
त्। एवं विशिष्टोपि नातिरिच्येत मानाभावात्। अन्योन्याभावावि
लक्षणो न द्रव्यत्वघटत्वाद्युपहितयोरङ्गीक्रियते। किंतु पारमेश्वररू
पाणामानन्दानुभवादेवेति प्राहुः। ननु तत्त्वमेकमित्ययुक्तं प्रत्यक्षादि-
विरोधात्। न चेयं प्रतीतिः भ्रान्तिरिति वाच्यं। एतद्वाक्यजन्य-
प्रतीतेरपि भ्रान्तित्वे तस्य विषयबाधनान्तरीकत्वेन प्रत्यक्षादेर्भ्रम-
त्वासिद्धेः। प्रमात्वे तस्य विषयबाधाभावनान्तरीयकत्वेन द्वितीय
तत्त्वाभ्युपगमस्य दुर्वारत्वात्। उभयविलक्षणत्वे ज्ञानत्वं न स्यादि
ति चेन्न। प्रत्यक्षादिना ग्राह्यमिथ्यात्वविरोधिसत्यत्वानिरुक्तेः।
प्रत्यक्षग्राह्यसजातिकालसंबन्धाश्रयस्य अनेकत्वे इष्टापत्तिः। भ्रा-

न्तित्वं हि ज्ञानोच्छेद्यविषयकत्वं स्वप्रकारकधीविशेष्यताव्यापका-भावप्रतियोगिविषयकत्वं तदत्यन्ताभाववति तदवगाहित्वं तद्वतो ऽन्यत्र तदवगाहित्वं वा । नाद्यः । प्रत्यक्षादिकं भ्रान्तिरिति प्रतीतिनिष्ठाभ्रान्तित्वस्य स्वविषये ज्ञानोच्छेद्यतानान्तरीयकत्वेपि स्वविषयज्ञानविषये ज्ञानोच्छेद्यत्वाभावासाधकत्वात् । नहि यत्र ज्ञानोच्छेद्यभ्रांतित्ववत्त्वं तत्र ज्ञानोच्छेद्यविषयकत्वमिति नियमे मानमस्ति । त्वन्मते ज्ञानोच्छेद्यभ्रमत्वस्यैवासिद्धेः । मन्मते घटादिप्रत्यक्षे व्यभिचारादनुकूलतर्करहितत्वात् । अत एव न द्वितीयः । प्रमायामारोपितभ्रमत्वे प्रमावृत्तित्वाच्च । न तृतीयः । स्वनिष्ठात्यन्ताभावप्रतियोगित्वस्य भ्रमत्वात्यन्ताभावाधिकरणस्य वा तादृशप्रतियोगिताशून्यविषयकत्वसहचरितत्वेपि तस्य तद्व्याप्यत्वासिद्धेः । प्रतियोग्यत्यन्ताभावयोरविरोधाभ्युपगमेनाप्रयोजकत्वात् । न चतुर्थः । अनभ्युपगमात् । नच प्रतियोग्यभावयोरविरोध एव प्रत्यक्षविरुद्ध इति वाच्यं । घटत्वाद्यवच्छिन्नतदभावादिरूपप्रतियोग्यभावयोर्विरोधस्य प्रत्यक्षादिसिद्धत्वेपि अतीन्द्रियघटितरूपावच्छिन्नप्रतियोगिताकाभावादिना प्रतियोगिविरोधे तदभावात् । तावतापि घटादेरनिर्वाच्यत्वानपायात् । स्वसमानाधिकरणाभावप्रतियोगितायाः मिथ्यात्वरूपत्वे तु सुतरां न तद्विरोधः । स्वसंसृष्टब्रह्मनिष्ठात्यन्ताभावप्रतियोगितामात्रेण तदुपपत्तेः अनुमानादिकं तु अप्रयोजकं । विश्वं सत्यमित्यादिश्रुतिरिन्द्रबृहस्पतिस्तुतिपरा न तच्छेषभूतावश्यपरमार्थतापरा । वाक्यभेदप्रसंगात् । किन्तु प्रामाणान्तराविरुद्धप्रत्यक्षव्यवहारकालाबाध्यत्वरूपाप्रमुख्यसत्यत्वानुवादिकैवेति न काचिदनुपपत्तिः । अधिकमन्यत्रानुसन्धेयम् ॥

॥ तत्त्वसंख्यानं समाप्तम् ॥

---

॥ श्रीराम जय ॥

पूर्णानन्दाय निर्भेदपरमानन्दमूर्तये ।
व्यासशंकररूपाय श्रीपरब्रह्मणे नमः ॥

ननु वेदान्तशास्त्रमनारम्भणीयं आश्रयानुपपत्त्या अज्ञानासंभवेनाज्ञातस्य विषयस्य अज्ञानिनो धिकारिणश्चासंभवात् । मैवं । शुद्धचित एवाज्ञानाश्रयत्वविषयत्वसंभवात । तदुक्तं । "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला" इति । नचाज्ञत्वसर्वज्ञत्वयोरेकाश्रयत्वानुपपत्तिः । तदीयज्ञानविरोधिनः तत्काले तदाश्रयत्वायोगेपि अन्यदीयज्ञानविरोधिनः तदाश्रितत्वे बाधकाभावात् । नचैवमज्ञं ब्रह्म ब्रह्मण्यज्ञानमिति व्यवहारापत्तिः । अयमज्ञ इत्यादौ व्युत्पत्तिवैचित्र्येणाज्ञपदार्थैकदेशेऽज्ञानविशेषस्य विशेषणत्वेन तेनान्वयोपगमात् ! ब्रह्मरूपंच ज्ञानंपरस्यैव ममापि स्वरूपभूतमेव साज्ञानविरोधि । यं भत्यापादकज्ञानं तस्य तदाश्रितत्वेनैव विरोधाव । एवमज्ञानान्वितसप्तम्यर्थविशेषणीभूततत्प्रकृत्यर्थस्य तस्मिन्नज्ञानमित्यादौ अज्ञानपदार्थैकदेशेऽज्ञाने धर्मिपारतंत्र्येणान्वयोपगमात् न ब्रह्मण्यज्ञानमिति व्यवहारापत्तिः । नन्विदमयुक्तं । जीवब्रह्मणोर भेदादिति चेन्न । स्वरूपैक्येपि औपाधिकभेदाभ्युपगमात । जीवोपाधिस्तु सुषुप्तिप्रळयाद्यनुवृत्तसंस्कारसाधारणं मनस्त्वाश्रयमात्रं । मनस्त्वविशिष्टतत्संस्कारान्यतरपर्यवसितं । अविद्याप्रतिबिंबो जीव इति पक्षेपि शुद्धचिदाश्रिताज्ञानप्रयुक्त एव जीवेश्वरभेदः मुखमात्रसंबन्धिदर्पणाद्युपाधिकृतमुखप्रतिमुखादिभेदवदिति तादृश तादृश प्रतिबिंबभूतजीवनिरूप्यत्वमेवाज्ञानस्य जीववदीशोप्यविद्याप्रतिबिंब इति पक्षेप्युपाधिगतनैर्मल्यतदभावाभ्यां वशीकृतोपाधित्वतदभावाभ्यां च ईशजीवयोर्विशेषः । सर्वज्ञताचेशनिष्ठा न शुद्धनिष्ठा । एवं च शुद्धचितोज्ञानाश्रयत्वेपि न क्षतिः । तयाः सर्वविषयकदृग्रूपत्वेपि

तदाधारत्वानभ्युपगमादिति वदन्ति। आचार्यवाचस्पतयस्तु जीवाश्रितामेवाविद्यां मन्यन्ते। तन्मते जीवोपाधिरविद्यातिरिक्तः नित्यश्चेदद्वैतहानिः। असत्यश्चेदविद्याधीनो वाच्यः। साचोपाध्यन्तरनिर्वाच्या। स चाविद्यान्तराधीन इत्यनवस्था। यदि चैकमेवाज्ञानमुपाधिश्च एकमेवेत्युच्यते तदाऽन्योन्याश्रयः चक्रं वा। उपाधिनिर्वाह्यभेदोपपाद्याधिकरणमज्ञानं तन्निर्वाह्यश्चोपाधिरिति। एकस्या अविद्याया एव सोपाधित्वे आत्माश्रय इतिचेन्मैवं। अविद्यातदुपहितभेदानामविद्योपहितचिद्रूपायाः तद्धियोऽप्यनादित्वेनोत्पत्तौ ज्ञप्तौ च आत्माश्रयाद्यनवकाशात्। न चाविद्यातिरिक्तानादिदृश्यस्याविद्याजन्यत्वाभावेन सत्यत्वापत्त्या अद्वैतहानिरिति वाच्यं। तस्य तदजन्यत्वेपि तत्प्रयुक्तत्वेन सत्यत्वानापत्तेः। तथाऽविद्याकृतोपकाराभावेन तत्प्रयुक्तत्वमप्ययुक्तमिति चेन्न। अविद्यानाशाधीननाशप्रतियोगित्वेन तदधीनस्थितिकस्याविद्यातिरिक्तानादिदृश्यस्य प्रतिबन्धकाधीनकार्यप्रागभावस्येव तत्कृतोपकारशून्यत्वासिद्धेः सत्योपाधिकृतसत्यभेदवादेपि न दोषः। उक्तरीत्योपाध्युपहिततद्भेदानामनादित्वात् भेदस्योक्तरीत्योपाध्यधीनस्थितिकत्वेन तत्प्रयुक्तत्वस्यौपाधिकत्वव्यपदेशः। यत्तूपाधिर्विद्यमानस्य भेदस्य ज्ञापक एव दृष्टपूर्वः नतु कारकः। महारजनाद्युपाधौ विद्यमानावयव्यवयवभेदव्यञ्जकताया एव दर्शनात्। न चायं पटस्यैव भेदकः द्वौपटावित्यप्रतीतेः। न च दण्डकुण्डलोपाधिभ्यां देवदत्तो भिद्यत इति वाच्यं। देवदत्तभेदस्य प्रतीतेर्दण्डकुण्डलसंबन्धाद्विशिष्टत्वस्यैवोत्पत्तेः। न चैवमनास्तु प्रकृत इति वाच्यं। उपाध्यपगमे जीवस्य विनाशेन न ब्रह्मैक्यमित्यापत्तेः। जीवे नष्टे स्वरूपमात्रावशेषः तदोच्यत इति चेत् तर्हि ब्रह्मण्येव बन्धमोक्षावप्यंगीकृतौ स्यातामित्युक्तदोषापत्तिरिति। तदसत्। कर्माधीनभोगाश्रयत्वादिबन्धलक्षणस्य ब्रह्मण्यात्यन्तिकलयरूपमोक्षस्य च विशिगतत्वेन शुद्धे तत्प्रसंगाभावाज्जीवस्योपाधिकृतरूपेण मुक्त्यन-

न्वयेप्यनौपाधिकशुद्धरूपेण तदन्वयस्य निष्प्रत्यूहत्वात् । महारजनादेः स्वोपहितपटभेदकत्वाभावे अत्र पटो रक्तो न न मूले वृक्षः कपिसंयोग्यग्रे नेति प्रतीतेरनिर्वाहात् । नच तत्र पटावयवविशेषस्य मूलादेश्च रक्तत्वाद्यधिकरणता प्रतीयते नतु पटस्यैवेति वाच्यं । अत्र पटो रक्त इत्याद्यनुभवविरोधात् । न चावयवविशेषावच्छेदेन पटे रक्तता प्रतीयत इति त्वया शक्यमभ्युपगन्तुं । तल्यन्यायेन भागान्तरावच्छेदेन रक्तत्वाभावस्यापि पटे स्वीकारप्रसंगेन प्रतियोग्यभावयोर्विरोधावच्छेदापत्तेः । नच तदवच्छेदकभेदेन तदविरोधिनैयायिकवत्त्वयाभ्युपगम्यते कार्यकारणलक्षणोपपादनपरतत्वटीकायां किञ्चाकाशस्य तावदंशा इत्यंगीकार्यं । अन्यथाकाशांत्रहगशरीराभावाभावौ न स्यातां । संयोगस्त्वात्यन्ताभावसमानाश्रय इति चेन्न । विरोधात् । अन्यथा सर्वत्र भावाभावविरोधाभावप्रसंगात् । न चोपाधिकृतांशसद्भावादविरोधः । उपाधेरपि विहगशरीरसमानयोगक्षेमत्वात् । न चाकाशस्योपादानकारणमस्ति । तस्मात्कार्यकारणातिरिक्तांशांशिनौ स्वीकार्यावित्यभिधानविरोधात् । तस्मात्पटत्वाश्रयो महापटांशोपि स्वीकर्तव्यः अनुभवविरोधात् । किञ्च स्वाभाविकभेदवतां गगनत्वाश्रयाणामंशानामभ्युपगमे अंशस्थानीयगगनाभ्युपगमो व्यर्थः । अधिकं तु तत्वरत्नपरीक्षायामनुसन्धेयं । एवं चोक्तयुक्त्या तव पटभेदाभ्युपगम आवश्यकः । द्वौ पटाविति प्रतीतिपरिहारावावयोस्तुल्यौ । किञ्च दण्डकुण्डलसंबन्धात् विशिष्टद्वयोत्पत्तिपक्षे व्ययं दण्डेन अयं कुण्डलेन दण्डकुण्डलिनौ द्वाविति प्रतीत्यापत्तिः कथं वारणीया नहि लोकानां तादृशप्रत्ययोस्तीति । अपरीक्षकाणां तु तुल्यं प्रकृतेपि तदस्मदनुभवैकपक्षपातेपि शिष्टांशाधिकमतिरिक्तं नोपपद्यं । युक्त्यनुभवयोरनुसरणे तु स्वांशता पटस्यापि दुर्वारणा । एवमनादिब्रह्मांशो जीवः । अंशांशिनोः भेद औपाधिकः । उपाध्यपगमे भेदात्यन्तसमुच्छेदादंशिनाऽविनाभावादत्यन्ताभिन्नाविव अंशावति

प्त इति। एतावानंशो भास्करानुमितो निरपवाद एव। भेदोपाध्योः पारमार्थिकत्वमनिर्वाच्यत्वमेति। अन्यदेतत्। नाद्वैतमतद्वयेपि परकीयकुचोद्यावकाश इति समानः। अनित्योपाधिकृतभेदस्त्वनित्य एव। यत्त्वनित्योपाधिस्थलेपि भेदस्य व्यंग्यत्वमेव नतु जन्यत्वं। अन्यथा गगनादौ घटाद्युपाधिसंबन्धस्य सर्वगतत्वे कृत्स्नस्याकाशस्यैकोपाधि नैव ग्रस्तत्वात् तेनाकाशभेदो न स्यात्। यदिचोपाधिसंबन्धः गगनाद्येकदेशवृत्तिः तदा तस्योपाध्यन्तरजन्यत्वे प्रागुक्तविकल्पो ग्राह्य इति तत्संबन्धस्यैकदेशवृत्तित्वं वाच्यं। एकदेशोपाध्यन्तराधीन एव वक्तव्य इति अनवस्थापत्तिरिति त्वन्मतं। त्वन्मतेपि एतद्दोपानपायात्। तथाहि। एकदेशः घटादिसंबद्धो न वा नान्त्यः। अनुभवविरोधत्। आद्ये किं कार्त्स्न्येन घटादिसंबन्धः एकदेशेन वा। नाद्यःकृत्स्नस्यापि घटाकाशत्वापत्त्या अनतिप्रसक्तस्योपाधिसंबन्धस्य वृत्तिजनकत्वाद्युपपत्तेः। न द्वितीयः। एकदेशस्य घटसंयुक्तत्वेप्येकदेशेन संयोगस्य सर्वात्मना सत्त्वाभावानुपपादनात्। एकदेशो घटादि नैव संबध्नातीत्यस्य चानुभवविरुद्धत्वात्। नन्वेकदेशिनो घटादिसंयोगः कारणेनैव। नचैवं आकाशादावुपरिभागेपि घटादिसंयुक्तत्वस्य व्यवहारापत्तिः। उपरिभागस्य घटादिसंयोगानवच्छेदकत्वाभ्युपगमादिति चेन्न। यत एकदेशोपि एकदेशिना सर्वात्मना संबध्यते। उतैकदेशेन। नाद्यः। एकदेशद्वयस्य सर्वात्मना संबन्धविशेषे कस्यचिद्भेदस्य घटादिसंयोगावच्छेदकत्वं नान्यस्येत्यत्रापि नियामकदौर्लभ्यात्। अवच्छेद्यसंबन्धस्यैवावच्छेदकत्वमित्युक्तावपि न सः। आश्रयस्यावशिष्टत्वोरेकसंयोगेऽपरसंयोगस्यापादनीयत्वादति। अथानुभवबलात् आधाराधेयभावे व्यवस्थिते तदनुसारेण तन्निर्वाहकः कार्यकारणभावः कल्प्यते। अतो नातिप्रसंगोपीति चेत् तर्हि कथं भास्करमतेप्यनुपपत्तिः। यावता समग्रस्य परस्परावच्छिन्नवृत्तिनं तत्तदुपहितं तदिदं जनयतीत्यभ्युपगमसंभवात्। तदनुसारेण स-

मग्रव्याप्तेरपि कल्पनासंभवाच्च । इदमत्र चिन्तनीयं । भेदस्योपाधिजन्यत्वे तुल्यपरिमाणसमानदेशभिन्नकालिकानन्तघटाद्यवच्छिन्नाकाशादीनामनन्तानां कल्पने गौरवं । उपाधिव्यंग्यत्वे तु तत्रैकस्यैव एकदेशस्याभ्युपगमाल्लाघवमित्यत्रावधेयं । घटसंयोगादिरूपागन्तुकविशेषेण विशिष्टस्याकाशस्य शुद्धाकाशादन्यस्याभ्युपगमो विशिष्टातिरिक्तवादिनामावश्यकः । एवंच ततोतिरिक्तघटाकाशाद्यभ्युपगमस्य नोक्तगौरवावकाश इति । यच्चौपाधिकभेदवत्त्वेपि स्वरूपैक्ये मैत्रस्य चैत्रसुखाद्यनुसन्धानप्रसंगः । एवमीशस्यापि बोध्यमिति तन्न । विशिष्टविभिन्नापाध्यवच्छिन्नयोः चैत्रमैत्रयोर्धर्मिणोरसांकर्यात् । तदीयकेवलरूपयोरभेदेपि अनुभवविरोधाभावात् । विशिष्टधर्माणां केवले प्यावश्यकत्वं तु न शक्यं शङ्कितुं । विशिष्टकेवलभेदवादेऽनुवृत्तत्वव्यावृत्तत्वादविरुद्धधर्माणां धर्मिषु परम्परासंबन्धाद्विरोधिप्रमाणानवतारे धर्मसांकर्यमावश्यकमिति चेन्न । तत्रापि निरवद्योनिरनिष्टः अनश्नन्न्योभिचाकशीतीति विरोधिप्रमाणसद्भावात् परमार्थतः तदभावस्य जीवसाधारण्यात् । भास्करमते तथावाक्तुमशक्यत्वाच्च । अतएवांशस्य भोक्तृत्वे अंशिनोऽभोक्तृत्वानुपपत्तिः परास्ता । अंशीन्द्रादिगतसुखाद्यनुसन्धानस्यांशिन्यप्यभावोपपत्तिश्च । सुखं भुञ्जानोऽहमस्मीत्यादिप्रतीतिबलादपि सद्रूपे ब्रह्मणि न सुखादिभोगप्रसङ्गः । तत्र भोगवदहंकारतादात्म्यभानमात्रेण तस्यास्तदाकारोपपत्तेः । धर्माध्यासे धर्मितादात्म्याध्यास तत्तत्प्रतिबिम्बाध्यासयोरन्यतरस्यावश्यकतायाः आकारेपूक्तत्वेपि धर्मितादात्म्याध्यासे धर्माध्यासनियमानुक्तेर्न तद्विरोधः । असति प्रमाणान्तरविरोधे विनिगमनाभावात् । परमिदं रजतमित्यादौ अहं सुखीत्यादौ च उभयाध्यासनियमः औत्सर्गिक इति न किंचिदनुपपन्नं । भास्करमतेऽध्यासानुपगमाच्च । न चौपाधिकभेदस्यानुसन्धानाभावप्रयोजकत्वे शरीराद्यवच्छिन्नस्य सुखाद्यनुसन्धातृत्वानुपपत्तिः । योगिनां सौभर्यादीनाम्

नेकशरीरावच्छिन्नसुखानुसन्धानानुपपत्तिश्चेति वाच्यं । सुखादेर-न्तःकरणधर्मस्य तदुपहिते शरीरावच्छिन्नेपि सत्त्वेन तदनुसन्धानस्य तस्मिन्नवर्जनीयत्वात् । योगिनोप्यन्तःकरणं युगपदनेकशरीरवर्तीति तत्तदवच्छिन्नात्मनः शरीरान्तरावच्छिन्नानेकसुखानुसन्धानमावश्य-कमिति न कोपि दोषः । न चेदमीशेपि तुल्यं । अन्तःकरणधर्मा-णां तदुपहिताश्रयत्वमात्रेणानुभवव्यवस्थितिः । ईशे तदाश्रितत्वक-ल्पकप्रतीत्यभावादेवासांकर्यात् । जीवान्तरे सुतरां । यदपि लाघवा-त् स्वरूपैमात्रमनुसन्धानप्रयोजकमिति तच्चिन्त्यं । किमिदमनुसन्धा-नप्रयोजकत्वं । न तावत्कारणत्वं । इष्टापत्तेः । तद्विशिष्टासिद्ध्या ऽर्थान्तरं च । अत एव न व्यापकत्वमपि । नापि व्याप्यत्वं । स्वरूपै-क्यशालिनोर्विशिष्टयोर्विरुद्धधर्माश्रयत्ववत् उक्तानुसन्धानतदभावयो-रुपपत्त्याऽनुकूलतर्काभावेन तदसिद्धेः लघोरिव गुरोरपि व्याप्य-तायामविवादेन लाघवमात्रेण स्वरूपैक्ये सत्युपाधिसंश्लेषस्यापि प्र-योजकताया निरसितुमशक्यत्वाच्च । एतेन प्रतिनियतकर्मव्यवस्थापि प्रतिकर्म व्याख्याता । वृत्तिसूक्ष्मावस्थारूपसंस्कारस्य वृत्तिवद्व्यव-स्थोपपत्तेः । पुण्यादेरतिरिक्तत्वेपि योगादिसामानाधिकरण्यानुरोधे-न जीवनिष्ठमेव तत्कल्प्यते । तस्य पारमेश्वरप्रीत्यादिरूपत्वेपि तद-वच्छेदकत्वं मनसः तदुपहितस्यापीत्यन्यत्र विस्तरः । यदपि प्रत्यक्ष-प्रमाणविरोधेन न जीवेशयोर्जीवानां वा स्वाभाविकैक्यमिति । त-दसत् । विभिन्नोपाध्यवच्छिन्नानां परस्परभेदस्यापि प्रतिपन्नत्वा-त् । शुद्धोपहितयोः भेदाभ्युपगमाच्च । नच भास्करमते प्रत्यक्षावि-रोधाद्यनवकाशोपि वेदान्तिनां मते स दुर्वारः भेदमिथ्यात्वाभ्युपग-मादिति वाच्यं । प्रत्यक्षग्राह्यमिथ्यात्वविरोधिसत्त्वानिरुक्तेः । स्व-रूपमात्रस्य मिथ्यात्वाविरोधित्वात् । एतेन कालसंबन्धादयोपि व्या-ख्याताः । वेदान्त्यभिमतमिथ्यात्वाभावस्तु योग्यानुपलब्धिशून्य-त्वान्न प्रत्यक्षः । भेदप्रत्यक्षादेस्तु व्यावहारिकमेव प्रामाण्यं । न ता-

त्विकं। निर्णीततात्पर्यकश्रुतिविरोधादिति अन्यत्र प्रपंचितं। केचित्तु ईश्वरादिभेदः न प्रत्यक्षः। योग्यानुपलब्ध्यभावात्। न चाधिकरणप्रत्यक्षमेव स्मरणसहकृतं भेदप्रत्यक्षहेतुः। नच प्रतियोगियोग्यतादि तंत्रमिति वाच्यं। एवं सति घटः पिशाचसंयोगी न्यापि प्रत्यक्षापत्तेः। नच यद्यहं सर्वज्ञस्स्यां तर्हि प्रत्यक्षीकुर्यास्स्यामित्यापादनसंभवात् अस्ति योग्यानुपलब्धिरिति वाच्यं। त्वन्मते मुक्तिकालाभिव्यंग्यपरमानन्दस्येव मन्मते सार्वज्ञादेरप्यावृतत्वादप्रत्यक्षसंभवेन योग्यानुपलब्धेरनवकाशात्। अन्यथा परमानदवद्भेदस्यात्मनि प्रत्यक्षताया दुर्वारत्वात्। विरोधिश्रुत्या स्वाभाविकपरमानन्दसिद्ध्यनापत्तेरिति दिगित्याहुः। नन्वेवमपि निर्विशेषपरब्रह्माप्रामाणिकं। "यस्सर्वज्ञस्सर्वविद् परास्य शक्तिर्विविधैव श्रूयते य आत्मापहतपाप्मा सर्वस्य कर्ता" इत्यादिश्रुतिभिः अनन्तविशेषे "सत्यः सोस्य महिमा" इत्यादिश्रुतिभिस्तावद्विरुद्धा सिद्धान्तेपि परमात्मन्यनिर्वाच्यानन्तकल्याणगुणाभ्युपगमाच्च। महिमशब्दोक्तस्य महत्त्वस्य परिच्छेदाभावरूपतयाऽधिकरणात्मनः तस्य सत्यतायामविवादश्च। सत्यशब्दस्यामोघार्थतासंभवाच्च। उपासकापेक्षितफलावश्यंभावद्योतनाय तदभिधानस्मावश्यकत्वात्। उपक्रमादितात्पर्यलिंगसाकल्ययुक्तिप्रबलाद्वैतश्रुतिशतविरोधिनायुक्तवाक्यानां तदनुगुणार्थपरताया वक्तव्यत्वाच्च। नच श्रुतिद्वयविरोधपरिहारेण तयोः प्रामाण्योपपादनसंभवे एकस्य अप्रामाण्यपर्यवसितानिर्वाच्या र्थपरत्वकल्पनं न युक्तमिति वाच्यं। वाक्यानामुपक्रमादिलिंगैर्विशेषपरतायामवगम्यमानस्वारस्यहेत्वभावेन तदन्तर्गतानां गुणशब्दानां प्रधानानुगुणेनैव नेयतया परतात्पर्यविषयार्थे प्रामाण्यस्याप्यव्यापकत्वेन द्वारभूतप्रतीत्यंशे व्यावहारिकप्रामाण्योपगमे चाप्रामाण्यानभ्युपगमात्। सक्रतुं कुर्वीतेत्युपासाविधिशेषभूतानां गुणानां व्यावहारिकत्वेप्युपासनावाक्यस्वारस्यभंगाभावेन ज्योतिष्टोमादिवाक्यवत् प्रमा-

णान्तराद्यविरोध्यर्थपरत्वकल्पनाया एव युक्तत्वात् । न चैतावता प्रामाण्यं । अतद्रूपस्य तद्रूपताप्रत्यायकं हि वाक्यमप्रामाणमुच्यते । न चैवं वेदः । जोतिष्टोमादिपरमार्थतायाः तेनाप्रतिपादनात् । तत्प्रतिपादकत्वं च तत्परत्वं । नतु तत्प्रतीतिजनकत्वमात्रं । "आदित्यो यूप" इत्यादिश्रुत्यप्रामाण्यप्रसंगात् । ननु यदि प्रामाण्यं तद्वति तत्प्रकारकत्वं तदा ब्रह्मनिर्विकल्पकेऽव्याप्तिरतिव्याप्तिश्च शुक्ताविदं रजतमिति ज्ञाने । नापि विशेष्यावृत्त्यप्रकत्वादि । स्वतस्त्वानुपपत्तेः । नापि त्रिकालाबाध्यविषयकत्वं । बाध्यत्वस्य नाश्यत्वरूपत्वे स्वतस्त्वानुपपत्तेः । अतस्त्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगिमद्विषयकत्वमेव तद्वाच्यं । तथाच कथं ज्योतिष्टोमवाक्यस्याप्रामाण्यमिति चेन्मैवं । एवमपि प्रामाण्यस्य स्वतस्त्वासंभवात् । नच साक्षिणा प्रामाण्यग्रहे योग्यानुपलब्धित्वं तंत्रं । चक्षुरादिग्राह्यसत्ताघटितस्यैव प्रामाण्यस्य साक्षिग्राह्यत्वानुभवात् । न चेदं चक्षुरादिग्राह्यमित्युक्तं । नचैवं सिद्धान्ते स्वतोग्राह्यं प्रामाण्यं दुर्वचं । तद्वति तदवगाहित्वस्यैव तत्त्वात् । नच भ्रमसाधारण्यापत्तिः । इष्टत्वात् । नच भ्रमत्वग्रहानन्तरमपि प्रवृत्त्याद्यापत्तिः । व्यावहारिकरजतार्थिनः प्रातीतिकत्वेन ज्ञाते तत्रापि प्रवृत्त्ययोगात् । व्यावहारिकं वा रजतं कटकादिरूपार्थक्रियाकारितयेष्यते । अत्रच तदभावनिश्चयान्न प्रवृत्तिः । नच शुक्तितात्पर्यकमिदं रजतमिति वाक्यमपि प्रमाणं स्यादिति वाच्यं । उक्तप्रमाकरणं स्यादित्यत्र इष्टापत्तेः । न चेदं वाक्यं अस्मिन्नर्थे प्रमाणमिति व्यवहारापत्तिः । प्रपदस्य तद्वति तत्प्रकारकत्वरूपप्रकर्षद्योतकत्वे तद्घटितप्रमापदयोगार्थमादाय तादृशव्यवहारस्येष्टत्वात् । परेषां स्मृतिकरणे तादृशव्यवहारवत् अग्निर्हिमस्य भेषजमित्यादिवाक्यस्य तादृशव्यवहारवच्च अनधिगतब्रह्मज्ञानेतराबाध्यविषयकत्वरूपप्रकर्षविवक्षायां तु न तादृशव्यवहारस्संभवति । सर्वज्ञानयाथार्थस्य भास्करयामुनादिभिरुक्तत्वात् । तन्मत एवोक्तोपाधिनिमित्तकयस्य

तादृशव्यवहारस्य भ्रमत्वेनोपात्तज्ञानकारणे मन्मतेऽपीष्टत्वात्। भ्रमत्वव्यवहारश्च बाध्यत्वाधीनः। एवं चापौरुषेयत्वेन वक्तृदोषशून्यानामागमानां तदधीनस्य व्यवहारकालाबाध्यार्थविषयकत्वलक्षणाप्रामाण्यस्यानवकाशः। नन्वेवं "सत्यं ज्ञानमनन्तं" इत्यादिश्रुतिसिद्धस्य ब्रह्मणोपि पारमार्थिकत्वं न स्यादिति चेन्न। तस्यापारमार्थ्ये जगदनिर्वाच्यताधारत्वनिर्वाहाद्बाध्याधिकसत्ताकाविषयकबुद्धेरेवेतरबाधकत्वात्। नचैवं प्रत्यक्षप्राप्तसत्यत्वानुवादिका "विश्वं सत्यं" इत्यादिश्रुतिः न स्यादिति वाच्यं। तादृश(त्ते)श्रुतेर्विश्वसत्यत्वादावपि तात्पर्यकल्पने वाक्यभेदापत्त्या अनुवादकताया एवोक्तत्वात्। परमानन्दावाप्तिलक्षणफलस्य तत्संबन्धस्य च श्रौतसिद्धान्ते निष्प्रत्यूहतया न काचिदनुपपत्तिः। नन्वज्ञानं भावोऽभावो वा। नाद्यः। तथात्वे अनादेर्भावस्य निवृत्त्यसंभवात्। न द्वितीयः। जगदुपादानत्वानुपपत्तेः। अत्राहुः। अज्ञाने भावाभावत्वयोर्घटनानुपपत्तिः। सप्तम्यामेव। नहि मायायाः दुर्घटत्वं दूषणं भवति। क्वापि लौकिकमायायां दृश्यत इति भावाभावविलक्षणैवा विद्येति। यत्तु दुर्घटत्वं भूषणं चेत्स्यादविद्यारवमात्मनः। अन्धं तमो प्यलंकारो नित्यदुःखं शिरोमणिः" इति। तनुभ्रातोर्नह्यनुपपत्तिमात्रं भूषणमिति ब्रूमः। येनोक्तदूषणं स्यात्। प्रामाणिकार्थे तत्प्रतिक्षेपाक्षमाभावत्वोऽवश्यमुपपादनीयमित्यस्ति कुलधर्मः। भेदादेरभावत्वानुपपत्तौ अभावत्वं घटादेरभावत्वानुपपत्तौ तद्विलक्षणताया अपि स्वीकारे बाधकाभावात्। आत्मनोऽविद्यात्वे च सर्वदाऽऽवृतत्वमसंगः। अविद्यानिवृत्तावात्मनिवृत्तिश्च स्यादिति दूषणं स्यात्। आत्मनः स्वप्रकाशत्वादज्ञाननिवृत्तिलक्षणत्वं विनाशित्वादिग्राहकबलवत्प्रमाणविरोधित्वं न दूषणत्वं। ननु ब्रह्मणि सर्वज्ञताग्राहकबलवत्प्रमाणविरोधज्ञानाश्रयत्वानुपपत्तिः। आत्माश्रयादिना जीवस्यातथात्वानुपपत्तिश्च न दूषणमिति चेन्न। सर्वज्ञताग्राहकप्रमाणस्याज्ञानाश्रयत्वविरो-

धित्वाभावात् । तदाश्रयत्वे सर्वज्ञताया उपपादित्वादात्माश्रयत्वोद्-निरस्तत्वाच्च । सर्वज्ञेस्थितस्याज्ञत्वस्याज्ञानगतारोपितत्वस्योपपादिततया दूपणतायाः अस्पृष्टत्वाच्च । नन्वज्ञानमज्ञानप्रयुक्तं नवा । नाद्यः अज्ञानप्रयुक्तत्वे ज्ञानान्निवृत्तेरयोगात् । नाद्यः । आत्माश्र॰ादिति चेन्न । अनादावपि स्वस्मिन्स्वप्रयुक्तत्वोपगमे बाधकाभावात् । यथा ह्यभावाधिकरणकाभावस्याभावस्वरूपत्ववादिनैयायिकमते घटाद्यभावस्य स्वात्मकघटाभावप्रतियोगित्वं तत्र रूपभेदोस्तीति चेत् । उत्तरोत्तरक्षणसंवन्धरूपतद्भेदः प्रकृतेप्यव्याहतः । वस्तुतस्तु ज्ञाननाश्यत्वेऽज्ञानत्वमेव प्रयोजकं । अज्ञाननाश्यत्वे च तत्प्रयुक्तत्वमिति न कोपि दोपः । नन्वज्ञानस्य तत्प्रयुक्तत्वेऽनिर्वाच्यतैव न स्यादिति चेन्न । किमनिर्वाच्यत्वं तत्प्रयुक्तताप्राप्यत्वं । येन तन्निवृत्तौ तन्निवृत्तिरापद्यते । किन्तु तदसत्त्वादिग्राहकप्रमाणभावस्य । तच्चाज्ञानेपि तुल्यं । वस्तुतस्तु भावत्वमेवाज्ञानस्य । अर्थक्रियाकारिताया एव भवतारूपत्वात् ततोन्यभावत्वस्य दुर्निरूप्यत्वमविद्यालक्षणविचारे प्रपंचितमस्माभिः । नचैवं शुद्धस्य जगदुपादानत्वं तत्कर्तृत्वं च नास्तीति मते तस्य भावत्वानुपपत्तिरिति वाच्यं । सर्वाश्रयत्वस्वाश्रयनिरूपितानवच्छिन्नतादात्म्यप्रति योगित्वान्यतरसंन्धेनार्थक्रियाकारित्ववत्ताया भावत्वरूपत्वोपगमात् । वस्तुतः तस्यापि जगत्कारणतापक्ष एव साधीयानित्यन्यत्र प्रपंचितं । "परोमात्रया" इत्यादिश्रुतिः परमात्मपरा नास्मत्प्रतिकूला । "जुष्टं यदापश्यत्यन्यमीशं" इत्यादिश्रुतावन्यपदं देहाद्यन्यपरं । "समाने वृक्षे पुरुषो निमग्न इति पूर्वमंत्रे देहादिविविक्ततयानुपलभ्यत्वरूपं अश्रुतायाः उक्तत्वेन तदानुगुण्यानुरोधात् परमसाम्यंचाभेद एव । निरञ्जनः परमं साम्यमुपैतीत्यनेन सामंजस्ये परमपदवैयर्थ्यात् । ब्रह्मभावबोधकश्रुत्यन्तराविरोधाच्चेति । ॥ इति श्रुतिरत्नप्रकाशिका ॥

॥ श्रियै नमः ॥

वन्दे वन्दारुमन्दारमिन्दिरानन्दमन्दिरम् ।
वृन्दावनपरं भक्तवृन्दावनपरं नुमः ॥

इह खलु परमपुरुषार्थसाधनमात्मतत्त्वज्ञानमामनन्ति न्याय वेदान्तनिष्णाताः । तच्चात्मतत्त्वं कर्तृत्वभोक्तृत्वादिनिखिलानर्थविरहितसच्चिदानन्दघनप्रत्यगभिन्नब्रह्मात्मकमिति तन्निरूपणीयं । निरूपणं च साधकप्रदर्शनबाधकनिराकरणाभ्यां तत्र साधकाः "असंगोह्ययं पुरुषः सत्यं ज्ञानमनन्तं ब्रह्म सदेव सोम्येदमग्रआसीत् नेहनानास्ति किञ्चन नात्रकाचनभिदास्ति तत्त्वमसि" इत्यादयो निश्चिततात्पर्यकोपनिषद एव । तत्रच निश्चितप्रामाण्यकप्रमाणान्तरविरोधे तात्पर्यानिश्चयात्तदविरोधः तावदुपपादनीयः । सच यावत्प्रत्यक्षादिग्राह्यद्वैतस्य पारमार्थिकत्वं नानिराक्रियते तावद्दुरुपपाद इति तस्य मिथ्यात्वमुपपादनीयं अतस्तदेवादौ स्वपक्षाद्युपन्यासेन प्रपंच्यते । तथाहि तत्र विप्रतिपत्तिः १ ब्रह्मप्रमातिरिक्ताबाध्यं सत्त्वेन प्रती-

१ ब्रह्मप्रमेत्यादि ॥ तत्र रजतत्वावच्छिन्नं तादात्म्यसंबन्धेन रजतत्वविशिष्टसंबन्धितया ज्ञायमानसर्वनिष्ठत्रैकालिकसंसर्गाभावीयतादात्म्यावच्छिन्नरजतत्वावच्छिन्नप्रतियोगिताविशिष्टं दृश्यत्वादिति विशेषानुमानं । ब्रह्मप्रमातिरिक्ताबाध्यत्वविशिष्टसत्त्वप्रकारकप्रतीतिविषयताविशिष्टावच्छिन्नत्वसामानाधिकरण्यरूपं तादृशावच्छिन्नत्वं वा तत्संबन्धेन स्वविशिष्टवत्त्वेन ज्ञायमानसकलनिष्ठत्रैकालिकसंसर्गाभावीयतत्संबन्धावच्छिन्नस्वावच्छिन्न प्रतियोगितासमानाधिकरणं दृश्यवृत्तित्वादिति । तत्र विशेषानुमाने शुक्तिरूप्यं न दृष्टान्तः । किंतु घटादिः । रजतं त्रिविधं । व्यावहारिकं प्रातिभासिकं उभयसाधारणं । रजतपदशक्यतावच्छेदकं च तृतीयं व्यावहारिकमेवेति । तत्र स्वत्वस्य व्यावहारिकप्रातीतिकमात्रवृत्तिरजतत्वयोरननुगतत्वात् । प्रातीतिकरजतत्वे उपादीयमाने व्यावहारिकरजतस्यावर्जनीयतया रजतावयवस्यापि यावदन्तर्गततया तत्र चानुगतधर्मावच्छिन्नाभावस्यानुमानात्प्रागसिद्धत्वे दृष्टान्ते साध्याप्रसिद्धितादवस्थ्यं । नच सत्त्वानुगतधर्मोपलक्षितप्रातीतिकरजतत्वावच्छिन्नाभावस्य व्यावहारिकरजतावयवेपि सत्त्वान्नायं दोषः ॥

त्वहं चिद्भिन्नं मिथ्या नवा विमतं मिथ्या नवेत्यादिः । अत्रच पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येन साध्यसिद्धावपि सिद्धसाधनमिति मते शुक्तिरूप्यादौ तद्वारणायाबाध्यान्तं पक्षविशेषणं । तुच्छे ब्रह्मणि च बाधवारणायार्हन्ति भिन्नान्ते । उक्तं हि दीधितिटीकायां अत एवातिप्राचीनाः अवच्छेदकावच्छेदेनानुमितावंशतः सिद्धसाधनस्य दोषत्वमंगीकुर्वन्तो ध्वनिव्यावर्तनाय शब्दा नित्यत्वानुमाने वर्णात्मकत्वं पक्षे निवेशयन्तीति । यदिच पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येन साध्यसिद्ध्या न सिद्धसाधनमिति नव्यमतमाद्रियते तथोद्देश्यताया-

---

नच सत्त्वविशिष्टावच्छिन्नाभावनिवेशे प्रयोजनाभावादिति वाच्यं । पूर्वक्षणवृत्तित्वविशिष्टरजतत्वावच्छिन्नाभावस्य त्रैकालिकत्वाभावेपि तत्तदवयववृत्तित्वविशिष्टरजतत्वावच्छिन्नाभावस्य तादृशयावद्वृत्तित्वेपि रजतत्वघटत्वाभ्यां रजतसामान्याभावं निरुक्तमादाय सिद्धसाधनवारणाय स्वत्वाविशिष्टावच्छिन्नाभावस्य निवेश्यत्वात् । नच तदर्थं स्वत्वपर्याप्त्यधिकरणधर्मपर्याप्तप्रतियोगितावच्छेदकताभाव एव निवेश्य इति वाच्यं । तावतापि स्वत्वपर्याप्त्यधिकरणीभूतप्रातीतिकरजतत्वेन व्यावहारिकरजताभावमादायोक्तदोषापारणेन तदर्थं उक्ताभावस्यैवोपादेयत्वादिति चेन्न । स्वावच्छिन्नवत्त्वेन प्रतीयमानयावन्निष्टाभावीयत्व स्वावच्छिन्नत्वोभयसंबन्धेन स्वविशिष्टप्रतियोगितासमानाधिकनणत्वस्य साध्यत्वेनानुपपत्त्यभावात् । स्वत्वस्यानुगतत्वेपि तदाश्रयैकव्यक्तेरेव संबन्धद्वयप्रतियोगिविधया निवेशात् । संबन्धेन स्वत्वं परिचायकं । यथाहि स्वप्रतियोगिवृत्तित्व स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वं उभयवृत्तित्वमिति श्रीमद्गदाधरभट्टैस्सिद्धान्तलक्षणे व्युत्पत्तिवादे चाभिहितं । प्रथमसाध्ये रजतत्वेन घटाभावप्रतियोगितासिद्ध्याऽर्थान्तरवारणाय स्वव्यधिकरण स्वावच्छिन्नप्रतियोगितावदवृत्तित्वं पक्षीभूतनिरुक्तरूपे विशेषणं देयं । द्वितीयसाध्ये तु घटत्वादिरूपे पक्षे पारमार्थिकत्वेन शुक्तिरूप्याभावप्रतियोगितायाऽर्थान्तरवारणाय साध्यघटकप्रतियोगितायां स्वसामानाधिकरण्यं देयम् ॥

मबाध्यान्तं नोपादेयमेव। इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि च बाधवारणायोपादेयं। तत्सामानाधिकरण्येन तथात्वे तु उक्ताबाध्यान्तमात्रं पक्षविशेषणं। यद्यपीदं सिद्धसाधनमुद्भावनीयं न माध्वेन। नापि वैशेषिकादिना शुक्तिरजतादौ माध्वैरलीकत्वस्य तार्किकैः पारमार्थिकत्वस्यैवाभ्युपगमात्। प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वमात्रस्य साध्यतायां तस्य शुक्तिरजतादौ माध्वैरभ्युपगमेपि ब्रह्मप्रमातिरिक्ताबाध्यत्वस्यापि तत्र तैरभ्युपगमेन सिद्धसाधनानुद्धारात्। सत्तादात्म्यपर्यवसितस्य सत्त्वेन प्रतीत्यर्हत्वस्यापि तद्व्यावृत्तत्वाच्च तथापि शुक्तिरजतादेरनिर्वचनीयत्ववादिना तांत्रिकैकदेशिना विवाद एवाबाध्यान्तस्य पक्षविशेषणत्वान्नासंगतिः। नचैवमपि ब्रह्मण्यारोपितक्षणिकत्वादौ सिद्धसाधनं दुर्वारं। तस्य क्षणित्वाभावप्रकारकब्रह्मज्ञानबाध्यतया ब्रह्मप्रमातिरिक्ताबाध्यत्वादिति वाच्यं। तस्य ब्रह्मान्यविषयकज्ञानाबाध्यत्वरूपपर्यवसितपक्षविशेषणस्यावश्यकत्वेन दोषानवकाशात्। नच तथापि मूलाविद्यानिवर्तकब्रह्मज्ञानाव्यवहितपूर्ववृत्तिप्रातिभासिकविशेषे सिद्धसाधनमशक्यवारणमिति वाच्यं। अबाध्यान्तेन ध्वंसो ज्ञानं चेत्येतदन्यतरजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तान्यत्वस्य विवक्षितत्वात्। ब्रह्मान्यविषयकज्ञानमित्यत्र परैश्च भ्रमजनकाज्ञानस्यानिर्वाच्यत्वानभ्युपगमात् उक्तविशेषणस्य तत्साधारण्येपि न क्षतिः। ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्य साध्यतायां उक्तान्यतरजन्यध्वंसप्रतियोग्यज्ञानभिन्नत्वे सति तत्प्रयुक्तान्यत्वं पक्षविशेषणं तेन शुक्तिरजताद्यारोपकारणीभूताज्ञानादौ न सिद्धसाधनं। उक्तप्रातिभासिकविशेषप्रयोजकाज्ञानं न ब्रह्मज्ञाननाश्यं तदसमानविषयकत्वात्। किंतु जीवेशभेदाद्यनाद्यन्तरवन्मूलाज्ञाननाश्यमेव। नचैवमज्ञानस्य स्वसमानविषयकज्ञाननाश्यतानियमो न स्यात्। उक्तज्ञान एव व्यभिचारादिति वाच्यं। तादृशप्रातिभासिकमन्यत्र विवेचितं। संप्रदायविदस्तु क्षणिकत्वादेरतीन्द्रियघटितपदार्थत्वे-

नातीन्द्रियतया परोक्षेऽन्यथाख्यातेरेवाभ्युपगमेन च क्षणिकत्वादिन प्रातिभासिकमित्याहुः। देहात्म्यैक्यादिकं च न तांत्रिकानुयायिमतेऽनिर्वाच्यं। तेनाहं मनुष्य इत्यादिज्ञानस्याप्रामाण्यानभ्युपगमादिति न तत्रसिद्धसाधनं शक्यं। यत्तु शुद्धब्रह्म वृत्तिविषयो नेति मते वियदादेरपि ब्रह्मप्रमान्यबाध्यत्वात् पक्षालाभ इति। तन्न युक्तं। तन्मते उपहितब्रह्मविषयकज्ञानस्यैव ब्रह्मप्रमातिरिक्तेत्यनेन विवक्षिततया तदबाध्यत्वस्य वियदादिसाधारणत्वात्। सप्रकारकज्ञानाबाध्यत्वं तु न विवक्षणीयं। तत्त्वेदंत्वोपलक्षितनिर्विकल्पकधीबाध्येनायं स इत्यादिभ्रमासिद्धभेदेपि सत्त्वात्। वस्तुतस्तु जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मविषयकज्ञानाबाध्यत्वमेवाबाध्यान्तेन विवक्षणीयं। तच्च जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मविषयिताशून्यधीः ध्वंसश्चेत्यन्यतरजन्यनाशप्रतियोग्यज्ञानप्रयुक्तान्यत्वं। तेन ब्रह्मत्वज्ञानत्वोपलक्षितलक्षितयोर्भेदस्यापि तदुपलक्षितब्रह्ममात्रविषयकनिर्विकल्पकधीबाध्यत्वात् पूर्वमतेपि तत्र सिद्धसाधनता दुर्वारेति शङ्कानवकाशः। एतादृशं च ज्ञानं जीवब्रह्मादिवादिनः यद्यपि तांत्रिकस्याननुमतं। तथाप्युक्तनिरूपितत्वद्वयशून्यविषयताशालिज्ञानं तस्यापि सम्मतमेव। विस्तरस्तु शास्त्रारम्भणे द्रष्टव्यः। यदि चाज्ञानमपि स्वप्रागभावध्वंसः घटादिर्ध्वंसोऽभाव एवेति मन्यते तदा ध्वंसपदेन ज्ञानान्यध्वंसो विवक्षणीयः। यद्वा ब्रह्मविषयताधीजन्यत्वध्वंसत्वावच्छिन्नजनकतानिरूपितजन्यत्वान्यतरनाशप्रतियोग्यज्ञानप्रयुक्तान्यत्वमबाध्यान्तेन विवक्षणीयमिति दिक्। यत्तु ब्रह्मप्रमेत्यत्र प्रमापदस्य सप्रकारकयथार्थज्ञानपरत्वे वियदादीनां तदन्यब्रह्मनिर्विकल्पकबाध्यत्वात्पक्षालाभः। सप्रकारकज्ञानमात्रस्य प्रमात्वासंभवश्च। नच प्रत्यक्षादीनां व्यावहारिकप्रमाणत्वेन तज्जन्यज्ञानानामपि व्यावहारिकप्रमात्वमस्त्येवेति वाच्यं। तथात्वे इयं शुक्तिरित्यादिज्ञानानामपि ब्रह्मप्रमात्वेन तद्बाध्य शुक्तिरजतादेः पक्षतापत्त्यंशतः सिद्धसाधनस्य दुष्परिहारत्वापत्तेः।

निष्प्रकारकज्ञानपरत्वे तत्ववादिना निष्प्रकारकज्ञानानंगीकारात् तं प्रत्याश्रयासिद्धेः । नैयायिकैरपि ब्रह्मविषयकनिष्प्रकारकज्ञाना- नंगीकारेण तन्मते प्याश्रयासिद्ध्यापत्तेः । अतो ब्रह्मविषयकप्रमा- भिन्नज्ञानमेव ब्रह्मप्रमेत्यनेन विवक्षितमिति केनचिदुक्तं तन्न । नैया यिकं तत्ववादिनं च प्रति विवादे उक्तविशेषणस्यानुपादेयत्वात् । अख्यातिवादे आश्रयासिद्ध्यनवकाशाच्च । तत्ववादिशब्देन तांत्रि- कानुयायिविवक्षायां नैयायिकरीत्यादेरसंगतिरेव । अस्तुवा यथाकथं- चित् तथापि प्रमापदस्य भ्रमाभिन्नार्थकत्वे ब्रह्मपदवैयर्थ्यं दुर्वारमेव । सिद्धान्ते तु प्रमापदस्यान्याविषयकार्थतया ब्रह्मपदसार्थकता बोध्या। विमतत्वं च यां कांचिद्विमतिमादाय ब्रह्मणि शुक्तिरूप्यादौ चाति- प्रसक्तं । उक्तरूपावच्छिन्नविमतिविवक्षणे चोक्तरूपस्यैव पक्षताव- च्छेदकत्वसंभवादितरांशोपादानमनतिप्रयोजनं । तथापि शुक्तिरू- प्याविषयिणीं यां कांचिद्धियं वियदादिसर्वविषयिणीं तद्व्यक्तित्वे- नोपादाय तद्धीविषयतयोपलक्षणविधया पक्षतावच्छेदकत्वानुसरणा- न्न दोषः । तस्यां विशेषणविधया पक्षतावच्छेदकत्वे विशिष्टविशेष्य कबुद्धौ विशेषणे तत्संबन्धेन विशेष्यनावच्छेदकावच्छेद्यत्वं प्रतीयते। व्याप्यवृत्तेश्च नावच्छेदकत्वमंगीक्रियते इति मिथ्यात्वस्य तत्प्रति- योगिस्वरूपसम्बन्धस्य व्याप्यवृत्तेरुक्तपक्षतावच्छेदकत्वमंगी क्रियते । तद्बुद्ध्या समानकालीनघटांशे विद्यमानस्य वक्ष्यमाणप्रतियोगित्वादि- रूपमिथ्यात्वस्य पक्षतावच्छेदकीभूततद्बुद्धिविषयत्वसमानकालीनत्वं विषयतायाः ज्ञानैकसमानकालीनतामते बाधितमित्यनुमितेः भ्रम- त्वापत्तेस्तदुपेक्षणमिति केचित् । यत्तु पक्षतावच्छेदकसामानाधिकर- ण्येन साध्यसिद्धिरूपानुमित्यनुरोधेनानुमितिकाले सत एव धर्मस्य पक्षतावच्छेदकत्वमुचितं । ब्रह्मप्रमेत्याद्यनुगतधर्माश्रयविमतिः विम- तिविषयत्वं वा पृथिवीत्वजलत्वाद्यननुगतधर्माश्रयविमतिविषयत्वं वा पक्षतावच्छेदकं नानुमानकालेऽस्ति । विमतेः समयवन्धसभ्यानुवि-

येयसंवरणादिना व्यवहितत्वात् । विषयतायाश्च विषयिसमानकालीनत्वनियमादित्यनुरोधेन विमतेस्तद्विषयत्वस्य वोपलक्षणविधया पक्षतावच्छेदकत्वानुसरणं । ननु पक्षतावच्छेदकाभावे पक्षतावच्छेदकविशिष्टहेतुज्ञानरूपपक्षधर्मताज्ञानं न स्यादिति चेन्न । स्वरूपसत्पक्षतावद्धर्मिवृत्तित्वज्ञानस्यैव पक्षधर्मताज्ञानत्वात् । न चावच्छेदकासत्त्वे पक्षतापि कथं वर्ततामिति वाच्यं । विषयजन्यज्ञानं प्रत्यक्षमिति लक्षणे विषयत्वेनाभिमते घटादौ स्वज्ञानपूर्वं विषयत्वस्याभावेपि विषयत्वेनावच्छेद्याया स्वज्ञानं प्रति जनकतायाः सत्त्वमिवोपपत्तेः । वस्तुतस्तु उत्सर्गतो विशेषणावगाहित्वरूपप्रमाणत्वस्य भावबाधोत्र दुर्वारः । अत एव गन्धप्रागभावावच्छिन्नो घटो गन्धवानित्यत्र बाध उक्तः । उपलक्षणत्वे तु तदसंभवः । अतो विमतिविषयत्वज्ञानं तद्विषयत्वं वा पक्षतावच्छेदकं । न्यायवाक्यजन्यपरामर्शपूर्वक्षणे विमतिज्ञानं तदुत्तरक्षणे च परामर्शः तदुत्तरक्षणेऽनुमितिरिति पक्षतावच्छेदकानुमित्योः समानकालत्वोपपत्तिरिति तदसत् । यतस्तद्धर्मविशिष्टविशेष्यकानुमितौ तद्धर्मसाध्ययोः समानकालत्वभानानुरोधेन तयोस्समानकालत्वापेक्षायामपि तद्धर्मानुमित्योः समानकालत्वापेक्षया न किंचिद्बीजमस्ति । तथासति भाविगन्धविशिष्टे रूपवत्तानुमितेरिदानींतनाया अप्यनुपपत्तेः । एतेन परामर्शकाले पक्षतावच्छेदकाभावे तद्विशिष्टहेतुमत्ताज्ञानरूपपरामर्शानुपपत्तिरूपशङ्का निरस्ता । स्वरूपसत्पक्षतावद्धर्मिवृत्तिताज्ञानस्यानुमितिहेतुत्वे द्रव्यं धूमवदिति परामर्शात् पर्वतो वह्निमानित्यनुमित्यापत्तिः उपलक्षणविधया पक्षतावच्छेदकावच्छिन्नविशेष्यताकपरामर्शस्य हेतुत्वं च परामर्शकाले पक्षतावच्छेदकाभावादनुपपन्नं । किंच नात्र पक्षतावच्छेदकविशिष्टे पक्षेहेतुमत्ताज्ञानासंभवोपि पक्षतावच्छेदकहेत्वोः समानकालत्वस्य निबाधत्वात् । अत एव न प्रमाणस्वभावबाधोपि । अपिच अनुमितिर्द्विविधा पक्षतावच्छेदकोपलक्षित साध्यावगाहिनी तद्विशिष्टे पक्षे साध्यावगाहि-

नी च। तत्राद्याया उद्देश्यत्वे असंकीर्णबाधासंभवेपि द्वितीयाया उद्देश्यत्वे तत्संभवेन अत एवेत्युपष्टम्भसंगतिः। नच यद्धीविषयत्वमित्यादिना त्वदुक्तरीत्या पक्षतावच्छेदकीभवद्विमत्यसमानकालीनघटादावनुमितेः भ्रमत्वापत्तिवारणायैव विमतिविषयत्वज्ञानस्य पक्षतावच्छेदकानुसरणमावश्यकमिति वाच्यं। एवमपि विमतिज्ञानासमानकालीनघटाद्यंशेनुमितेः भ्रमत्वापत्त्या विमतिज्ञानविषयत्वस्यापि विषयविशेषणविधया पक्षतावच्छेदकत्वासंभवात्। तथाचोक्तं विमतिज्ञानस्य न्यायवाक्यप्रयोज्यपरामर्शपूर्वक्षणे कल्पनं तस्य तद्विषयत्वस्य वा पक्षतावच्छेदकत्वानुसरणं च निरर्थकमेव। किंच त्वदुक्तविमतिज्ञानस्य तद्विषयत्वस्य वा विशेषणविधया पक्षतावच्छेदकत्वे पूर्वोक्तरीत्या नुमितेः भ्रमत्वापत्तिः। मिथ्यात्वस्य व्याप्यवृत्तितामाश्रित्यार्थान्तरापत्तिश्च। मन्मते त्वनवच्छिन्नविशेषणतायाः साध्यतावच्छेदकसंबन्धत्वोपगमाददोषः। अव्याप्यवृत्तितानिर्वाहकविलक्षणावच्छेदकत्वानिरूपकत्वानवच्छिन्नत्वं। तद्विशिष्टविशेषणता च साध्यतावच्छेदकसंबन्धः। विशेषणीभवद्धर्मगतं चावच्छेदकत्वव्याप्यवृत्त्यादिनिरूपितावच्छेदकतासाधारणमिति विमतिज्ञानस्य तद्विषयताया वा विशेषणविधया पक्षतावच्छेदकत्वेपि नार्थान्तरमिति यदि विभाव्यते तदा विमतेः तद्विषयत्वस्य त्यागो निर्बीज एव। प्रागुक्तं बीजान्तरं तु विमतिज्ञानादित्यागेपि भवत्येव हेतुरिति दिक्। प्रत्येकं वा विप्रतिपत्तिः वियन्मिथ्या न वा पृथिवी मिथ्या वा न वेत्यादिः। एवं वियदादेः पक्षत्वेपि नघटादौ संदिग्धानेकान्तिकता पक्षसमत्वाद्घटादेः। तथाहि: पक्षे साध्यसन्देहस्यानुगुणत्वात्पक्षभिन्न एव तस्य दूषणत्वं वाच्यं। अत एवोक्तं साध्याभावनिश्चयवति हेतुसन्देह एव संदिग्धानैकान्त्यमिति। पक्षत्वं साध्यसन्देहवत्त्वं। तच्च घटादिसाधारणं। अतस्तत्र सन्दिग्धानेकान्तिकत्वं न दोषः। पक्षसमत्वोक्तिस्तु प्रतिज्ञाऽविषयत्वमात्रेण। नच तर्हि प्रतिज्ञाविषयत्वमेव पक्षत्वमिति

वाच्यं। स्वर्गानुमाने तदसंभवात्। एवंविधविप्रतिपत्तौ सत्यां एवं प्रपाप्त्यभिधानावसरे प्रत्येकं वियदादिधर्मिनिर्देशेन प्राप्तकालत्वं। यत्तु प्रकृतानुमित्युद्देश्यतावच्छेदकधर्मवत्त्वं पक्षत्वमिति। तन्न। साध्याभाववत्तया गृह्यमाणधर्मिप्रतीताज्ञानस्यानुमितिविरोधित्वे तादृशधर्मिणः प्रकृतानुमित्युद्देश्यत्वतदभावयोरकिंचित्करत्वात्। नच पक्षे साध्यसन्देहदशायामनुमित्युपपत्त्या पक्षातिरिक्ते धर्मिणि साध्याभावावगाहित्वमेव व्यभिचारज्ञाननिष्ठप्रकृतानुमितिप्रतिबन्धकताया अवच्छेदकतोपेयत इति पक्षातिरिक्ते साध्याभावसंशयात्मकस्य व्यभिचारज्ञानस्यानुमितिविरोधित्वं निष्प्रत्यूहमिति उक्तस्थले संदिग्धानैकान्तिकता दुर्वारैवेति वाच्यं। यतो व्यभिचारज्ञानस्य न साक्षादनुमितिविरोधित्वं मानाभावात्। उक्तं हि करणे पूर्णे किं न सिद्ध्येदिति। किंतु तज्जनकव्याप्तिग्रहविरोधितयैव। तत्र साध्याभावविषयतानिरूपितधर्मिविषयतायाः पक्षविषयताव्यावृत्तायाः विरोधितावच्छेदककोटिनिवेशे सर्वेषामपि धर्मिणां कदाचिदनुमित्युद्देश्यतासंभवेन विरोधितावच्छेदकस्यैव दुर्वचत्वापत्तेः। विशिष्य यत्किंचिद्धर्मिविषयताव्यावृत्ताया एव धर्मिविषयतायाः विरोधितावच्छेदककोटिनिवेशस्तु विनिगमनाविरहादयुक्तः। तद्धर्मिपक्षकानुमितौ तद्धर्मिकसाध्यसंशयस्य दूषकत्वापादकश्च। तस्मात्साध्यप्रकारतानिरूपितसाध्याभावप्रकारतानिरूपितधर्मिविषयताया एव विरोधितावच्छेदककोटौ निवेशनीयत्वात् नासन्दिग्धानैकान्तिकत्वं। वस्तुतस्तु अनुकूलतर्कास्फूर्तौ पक्षीयव्यभिचारसंशयोपि व्याप्तिग्रहप्रतिबन्धको भवत्येव। यदाहुः “अनुकूलतर्कास्फूर्तौ सन्दिग्धानैकान्तिकत्वस्येष्टत्वात्। अत एव पक्षस्साध्यारिक्तपक्षधर्मतातिरिक्तधर्मवान् मेयत्वादित्यनुकूलतर्कविरहिणोर्बाधप्रतिरोधयोरनवतारेपि पक्ष एव सन्दिग्धानैकान्तिकताया अप्रयोजकतांगीक्रियते” इत्यादि। तथा च अनुकूलतर्काणां वक्ष्यमाणत्वात् नासंदिग्धानैकान्तिकत्वमिति विभाव-

नीयं। प्रमाणं चात्र विमतं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वात् शुक्तिरूप्यवदित्याद्यनुमानमेव। नावयवेष्वाग्रहः। ननु किमिदं मिथ्यात्वं न तावदत्यन्तासत्त्वमपसिद्धान्तात्। नाप्यनिर्वाच्यत्वं तस्यानिरुक्तेः। सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयवत्त्वं तथोक्तेतरविशिष्टापरं वातत्। सत्त्वासत्त्वयोरेकतरनिषेधेऽपरसत्त्वावश्यकतया व्याघातात्। निर्धर्मकब्रह्मवत्सत्त्वराहित्येपि सद्रूपत्वेनामिथ्यात्वोपपत्त्यार्थान्तरात्। शुक्तिरूप्ये बाध्यत्वरूपासत्त्वव्यतिरेकासिद्ध्या साध्यवैकल्याच्च। नच प्रकृतसाध्यघटकसत्त्वात्यन्ताभावस्य सत्त्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वरूपतया असत्त्वात्यन्ताभावस्य च सत्त्वेन प्रतीयमानत्वपर्यवसितत्वेन उभयोश्च शुक्तिरूप्यादावेव सत्त्वेन न व्याघातः नवा साध्यवैकल्यमिति वाच्यं। अत्यन्तासतः प्रतीत्यंगीकारे शब्दादितः सत्त्वेनापि प्रतीतिसंभवेन शून्यवादापत्तिवारणायोपात्तस्य निरुक्तांशस्य निरर्थकत्वापत्तेः। तुच्छं सदिति प्रतीतेस्संभवेपि विपयत्वादिना तुच्छावगाहिन्या विपयस्सन् शशशृंगं सदित्यादिप्रतीतेः दुरपह्नवतया सत्त्वेन प्रतीतेर्निरपवाद इत्यादीति चेन्मैवं। असद्विलक्षणत्वं हि सत्तादात्म्यं। नचैवं शुक्तिरूप्यादौ साध्यवैकल्यं। शुक्तिरूप्यादेरनिर्वाच्यत्वादिना तांत्रिकैकदेशिना विवाद एव उक्तोभयसाध्यवत्त्वोपगमात्। माध्वं प्रति प्रयोगे च स्वप्रकारकधीविशेष्यताव्यापकात्यन्ताभावप्रतियोगित्वमात्रस्य साध्यत्वान्नोक्तदोषावकाशः। अत्यन्तासत्त्वमादायार्थान्तरं तु सत्तादात्म्यरूपासद्विलक्षणत्वस्य पक्षतावच्छेदककोटौ निवेशो न संभवति। घटाद्यवच्छिन्नचितेव गुरुत्वाद्यारोपस्वीकारेण ब्रह्मणो जगदुपादानत्वेन परोक्षभ्रमविपयेनांशतो बाधः। नाव्यापकवर्हिभावः। सत्तादात्म्यस्य स्वास्मिन्नपि संबन्धाभ्युपगमान्नोक्तदोषः। सत्तादात्म्यसत्त्वान्यतरत्वं वा तत्। नच इदं रजतं सदित्यध्यासबलेन शुक्तिरजतादेरिव शशशृङ्गं सदित्यादिप्रतीतिबलात् शशशृङ्गेपि सत्तादात्म्यमंगी-

कार्यं। एकत्रान्यथाख्यातिः अपरत्रानिर्वचनीयख्यातिरित्यत्र विनि-
गमकाभावादिति वाच्यं। शशशृङ्गं सदिति प्रतीतेरलीकविषयत्वा-
सिद्धेः। तथाहि किमलीकं शशशब्दार्थः शृङ्गपदार्थः समासार्थो वा।
नाद्य द्वितीये पदान्तरवैयर्थ्यापातात् वाच्यतावच्छेदकानिरूप-
णाच्च। शशीयत्वसमानाधिकरणशृङ्गत्वादिकमलीकत्वान्न तथा। प्रवृ-
त्तिविषयवृत्तेरेव तथात्वात्। नाप्यखण्डधर्मान्तरं। शब्दादन्यतः त-
त्प्रतीत्यभावेन शब्दादेव तत्प्रतीतेर्वक्तव्यतया समयग्रहार्थं शब्दान्त-
रापेक्षापरंपरायाः अनवस्थाप्रसंगात्। विशेषदर्शिनामेतादृशवाक्यज-
न्यप्रतीत्युत्तरं शृङ्गं शशीयं नेति बाधापत्तेश्च। न ह्यसति विशेषदर्श-
ने गोशृङ्गं सदिति प्रत्ययवत्तादृशप्रत्ययस्य स्वविरोधिज्ञानप्रतिबन्ध
रूपकार्यनिर्वाहकतायामस्ति मनागपि कश्चिद्विशेषः। अन्यथा अनुभ-
वविरुद्धकल्पनापत्तेः। अथोच्यते शशीयत्वशृङ्गत्वाभ्यामलीकं प्रतीय-
त इति। तन्न। असत्ख्यातिविलोपापत्तेः। अत एवन तृतीयः। शृङ्गं
शशीयमित्यादौ गत्यभावाच्च। उद्देश्यतावच्छेदकावच्छेदेन विधेया-
वगाहिनि विषयस्सन्नित्यादिप्रत्ययेपि न विषयत्वेन सद्भानं। किंतु
विषयवत्त्वव्यापकतायाः सति तत्तादात्म्यभानमुपेयते। सा च व्या-
पकता मतभेदेन प्रातिभासिकी व्यावहारिकी वेत्यन्यदेतत्। भ्रम-
त्वमपि तादृशज्ञानस्य सर्वसंमतमेव। नन्वेवमत्यन्तासतः सत्त्वेन प्र-
तीतिरप्रासैवेति यथाश्रुतमेव रमणीयमिति चेत्सत्यं। एतत्कल्पे वि-
षयस्सन्नित्याकारकप्रतीत्या सत्यपि सत्त्वेन प्रतीतिं कश्चिद्ब्रूयात् तं
प्रत्येवोक्तरीत्यनुसरणं। तत्रापि तद्धीविषयत्वेन भासमाने तुच्छा-
न्यस्मिन्नेव सत्त्वं भासत इत्युच्यते तदा यथाश्रुतमेव रमणीयं। के-
चित्तु सत्त्वेन प्रतीत्यर्हत्वसदसदुभयादिवाचकपरादिपदाभिन्नपदवा-
च्यतावच्छेदकरूपावच्छिन्नत्वेन प्रतीयमानत्वं। नचैवं सति कालसं-
बन्धि सदिति प्रतीतिमादायोक्तदोषतादवस्थ्यं। नह्यस्ति नियमः
सत्तादात्म्यशून्यत्वमेवासत्पदवाच्यतावच्छेदकं न कालसंब-

न्धित्वादिकमिति वाच्यं। सत्त्वेन प्रतीयमानत्वमित्यत्र सत्त्वशब्देना-सद्व्यावर्तकत्वेनाभिमतसत्तादात्म्यव्यक्तीनामकालसंबन्धिनामेवोपा-देयतयोक्तदोषानवकाशात्। शशशृङ्गं सदित्यादिप्रतीतिमादायोक्त-दोषस्तु प्राग्वन्निरसनीय इत्याहुः। यद्वा सत्तादात्म्यप्रकारकापरोक्ष-विषयत्वं तद्रूपत्वाद्यप्युक्तरूपेण ईश्वराद्यपरोक्षविषय एव। न चेश्वरा-द्यपरोक्षभ्रमवाध्यत्वेन दृश्यमवगाहते। येन विपर्ययस्स्यात्। यत्तु सद्रूपप्रतियोगिकत्वविशिष्टतादात्म्यस्य सद्रूपे अभावेन तस्यासत्त्वाप-त्तिः। इष्टापत्तौ तत्सत्त्वबाधकानां सत्यमित्यादिश्रुतीनामप्रामाण्याप-त्तिरिति तदसत्। सत्प्रतियोगिकतादात्म्यशून्यत्वस्यैवासत्त्वरूपत्वे-न सत्प्रतियोगिकत्वविशिष्टतादात्म्यभानाभ्युपगमे प्यसत्त्वापादना-योगात्। प्रकृते तादृशशरीरे उक्तासत्त्वाभावस्य निवेशेपि श्रौतस-त्यादिशब्दानामबाध्यार्थकतयानुपरोधाच्च। नच विशिष्टस्य त्वन्मतेऽति-रिक्ततया घटादितादात्म्यापन्नस्य सतः घटादितादात्म्यापन्नात् त-स्मादतिरिक्ततया एकेन सता सर्वानुभूतेन सर्वप्रतीत्युपपादनं तवा-पि दुर्घटं। शुद्धस्य च चाक्षुषविषयत्वे मिथ्यात्वापत्तेः न तेनाप्युक्त-प्रतीत्युपपादनासंभव इति वाच्यं। अविद्योपहितसद्रूपस्यैव सर्वदृ-श्यानुगतस्य घटस्सन्नित्यादिसर्वप्रतीतिविषयत्वोपगमेन अनुगतव्य-वहारानुपपत्तेरभावादनेकसद्व्यक्तिकल्पने गौरवाच्च वियदादिभेदभि-न्नब्रह्मस्वरूपानन्त्यस्य तव मम च बाधेपि तदन्यवियदादिसमसं-ख्याकसद्व्यक्तिकल्पनागौरवं तव मते दुर्वारं। एवं सति विशेषाभेदेपि व्यक्तिनद्विशेषद्वयस्यावश्यकत्वात्। प्रपंचितं चैतदन्यत्र। सदसद्विशे-ष्यकप्रतीतावुपहितविषयत्वेपि तद्विशेषणप्रतीतौ शुद्धस्यैव विशेषणत्व-संभवाच्च। दृश्यत्वं च प्रकारतानिरूपितविषयत्वं। यद्वा प्राचीनतार्कि-कमतवत्प्रकारतायाः न विषयतात्वं। अतो ब्रह्मणः न दृश्यत्वापत्तिः। यत्त्वेवं सति पारमार्थिकरजतं विनापि शुक्तौ रजतप्रतीतिव्यवहारा-दिदर्शनात्परमार्थसत्पदार्थं विनापि सत्प्रतीत्यादेरुपपत्तावपि लाघव-

मिति ब्रह्मापि सद्रूपं न स्यादिति । तन्न । दृश्यमात्रबाधकज्ञानविषयस्य ब्रह्मणो बाधकान्तराभावेन अबाध्यत्वमसक्तेरप्रत्यूहत्वात् । नच शून्यज्ञानमेव तद्बाधकं । तस्य परतस्सिद्धौ सांवृतत्वापत्तेः । स्वतस्सिद्धौ शून्यतायाः परिभाषामात्रत्वात् । व्यक्तीभविष्यति चेदमुपरिष्टात् । सन्ति ब्रह्मणो बाध्यत्वाभावबोधिकाः "सत्यं ज्ञानमनन्तं ब्रह्म अविनाशीवा अरे अयमात्मानुच्छित्तिधर्मा असन्नेव सभवति असद्ब्रह्मेति वेदचेत् अस्तीत्येवोपलब्धव्य इत्यादिश्रुतयः । सन्घट इत्यादिप्रत्यक्षं चनातीन्द्रियवस्तुघटितबाध्यत्वाभावविषयकमित्यादिवक्ष्यते । किंच अबाध्यवस्तु नांगीकार्यमित्यापादयता सन्घट इत्यादिप्रतीतिरंगीक्रियते नवा । नचेदनुभवविरोधः । अङ्गीकारे तु साऽनुगतैकनिर्वाच्यविषयिणीत्युच्यते नवा । नोचेदनुगतप्रतीत्यनुपपत्तिः कल्पना गौरवमागतानिर्वाच्यतद्विषयकत्वेन तद्बाधकधीविषयस्स्यात् । सच्चेत्युभयमंगीकार्यं न वेति गौरवमेवेति यत्किञ्चिदेतत् । यत्त्वेवं सति सत्त्वाभावानुमानस्य लाघवेन प्रातिभासिकसत्ताभावे पर्यवसानापत्या जगच्छून्यमेव स्यादिति । तदपि न । शून्यस्य निस्स्वरूपतारूपत्वेनार्थक्रियानुपपत्तेः । अनिर्वाच्यतारूपत्वेत्विष्टापत्तेः । तृतीयप्रकारस्तु शून्यतया दुर्निरूपः । यत्तु निर्धर्मकत्वाद्ब्रह्मणः सत्त्वासत्त्वानुमापकधर्मद्वयशून्यत्वेन मिथ्यात्वापत्तिरिति । तदसत् । सद्रूपत्वेन ब्रह्मणः सत्त्वात्यन्ताभावानधिकरणत्वात् । सद्रूपं च सत्त्वोपहितप्रतियोगिकतादात्म्यानुयोगिकत्वं । तादात्म्यं चात्र विशिष्टकेवलभावेन बोध्यं । एवंच ब्रह्मणि सत्त्वस्यांगीकारे न तत्र तस्यात्यन्ताभावः स्वाश्रयवत् । स्वाश्रय इव केवलरूपेपि तदभावानभ्युपगमात् । अन्यथा गगनैकदेशवृत्तिविहंगमसंयोगादेर्गगनवृत्तितया गगने तदत्यन्ताभावस्वीकारापत्तेः । तथाच ब्रह्मणि सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वसाधकत्वेन तदुक्तस्य निर्धर्मकत्वस्य ब्रह्मणि सत्त्वे तद्बाध्यत्वाभावरूपसत्त्वस्यापि ब्रह्मण्यभ्युपगमसंभवेन नातिव्याप्त्यवकाशः । तदन-

भ्युपगमे च तद्वदेवोक्ताभावद्वयस्यानभ्युगमसंभवेन नोक्तदोषः। यद्वा सद्रूपत्वेनेत्यस्य बाध्यत्वाभावत्वेनेत्यर्थः। तथाच ब्रह्मणि भावरूपधर्मानाश्रयत्वेप्यभावरूपधर्माश्रयत्वेन नातिव्याप्तिः। नोक्ताभावस्य ब्रह्मस्वरूपत्वेन तस्मिन् तदभावोस्त्येवेत्यतिव्याप्तिः। तद्भिन्नत्वेनैवाद्वैतहानिः भावाद्वैतपक्षेप्यभावाश्रयत्वादिना भावेन ब्रह्मणः सविशेषत्वापत्तिः अभाववत्पदवाच्यतापि स्यादिति वाच्यं। यतस्तादृशाभावस्य ब्रह्मात्मकत्वे तादृशाभाववत्त्वोपहितसत्तादात्म्यस्य ब्रह्मणि सत्त्वेन तत्र तदत्यन्ताभावासंप्रतिपत्तेः तस्य तद्भिन्नत्वेपि नाद्वैतहानिः। भावाद्वैतपक्षाश्रयणात्। तादृशाभावाश्रयत्वादिकं च तादृशाभावब्रह्मोभयबहिर्भूतं। त्वन्मते भावेन सविशेषता ब्रह्मण इष्टैव। स्वसमानसत्ताकस्वाभिन्नाभावात्मकविशेषवत्ताया एव सविशेषतारूपत्वात्। एवं विषयादिपदवाच्यतापीष्टैवेति संबन्धः। नच ब्रह्मणोऽवाच्यत्वे सिद्धान्तविरोधः। अभावस्य स्वज्ञानाबाध्यधर्मप्रवृत्तिनिमित्तकशब्दवाच्यत्वस्यैव मतान्तरव्यावृत्तस्य तदर्थत्वात्। गुरुचरणास्तु सत्त्वाभाव इत्यत्र सत्त्वं सत्त्वोपहिततादात्म्यं सत्ता च सिद्धान्तेऽबाध्यत्वोपलक्षितब्रह्मस्वरूपभूतं। परमते तु तद्घटादिरूपविषयसत्तात्मकं। तत्र सिद्धान्ते आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा इति पञ्चपादिकानुसारेणोक्तसत्ताया आधिकरणत्वमपि ब्रह्मणि कल्पितं स्वीक्रियते। साचाधिकरणता आरोपोपहितं ब्रह्मण्येव नतु शुद्धे। सत्त्वोपहिततादात्म्यं च शुद्धेपि स्वीक्रियते। एवंच स्वाभाविकोयं सत्त्वसंबन्धिनः तदुपहितप्रतियोगिकस्यानौपाधिकस्य तादात्म्य स्वरूपेण भावेन तादात्म्य प्रतियोगिन्यधिकरणोत्पन्नाभावः सत्त्वशब्देन विवक्षितः। सत्तायाश्च तत्पदशक्यतावच्छेदकत्वेन मतद्वयसाधारणरूपेण साध्यकोटौ निवेशः। नातो विशिष्य ब्रह्मसत्ताया उपादाने सिद्धसाधनं। तत्स्वरूपत्वोपादाने अंशतो बाधः। उक्तसत्तात्वेन निवेशेपि तद्धीत्यादिदूषणानवकाश इत्याहुः।

अबाध्यं सर्वं प्रमेयमित्याकारकयत्किंचिद्धीविषयत्वरूपं सत्त्वं तद्भावश्चात्र साध्यकोटौ निविष्ट इत्यपि वदन्ति । न चात्र कल्पे सर्वं प्रमेयमित्यादिप्रतीतावबाध्यत्वेन तदुपहितब्रह्मणो विषयत्वेपि शुद्धस्याविषयत्वात् शुद्धेऽतिव्याप्तेः । तद्धर्मप्रकारकप्रतीतौ तद्धर्मोपहितस्यैव विषयत्वमित्यन्यत्र व्यवस्थापितत्वात् । उपहितव्याप्तिश्च शुद्धब्रह्मणस्स्वप्रकारकवृत्तिवेद्यत्वाभ्युपगमेप्यनेकत्वघटितसर्वत्वस्य तत्र बाधितत्वेनोक्तवाक्यस्य प्रामाण्यानिर्वाहश्चेति वाच्यं । पदार्थतावच्छेदकविशिष्टपरत्वशून्यतद्वाक्यतात्पर्यं विलक्षणग्रहजन्यबोधविषयताया एव तदर्थत्वात् । नच विशिष्टार्थपरत्वशून्यतादृशवाक्यादुपलक्षणादिशाब्दबोधासंभव इति वाच्यं । विशिष्टपरत्वशून्यतानिश्चयसहकृतविशिष्टशक्तिग्रहादेवोपलक्षितार्थविषयकशाब्दबोधाभ्युपगमात् । उपपादितं चै तदन्यत्र । सर्वपदं वा अशेषार्थपरत्वतात्पर्यग्राहकं अतो न काचिदनुपपत्तिः । नन्वेवमपि प्रथमकल्पस्य प्रतिपन्नेत्यादिना पौनरुक्त्यापत्तिरिति चेन्न । प्रतिपन्नेत्यादेरुक्तसाध्यातिरिक्तसाध्यपरतायाः वक्ष्यमाणत्वात् । यत्तु सत्त्वेन प्रतीयमानत्वं नासत्त्वं तथासत्यसत्त्वेन प्रतीयतेति त्वदुक्तापाद्यापादकयोरविशेषप्रसङ्गादिति । तन्न । सत्तादात्म्यशून्यत्वस्यापादकत्वेन अपरोक्षप्रतीत्याविषयत्वस्य चापाद्यत्वेन विवक्षिततयोक्तदोषानवकाशात् । अधिकमनिर्वचनीयख्यातौ वक्ष्यते । एवं सद्भेदासद्भेदोभयवत्त्वं सद्भेदादिविशिष्टसद्भेदादिमत्त्वं वा । नच सदन्तरभेदस्यासद्भेदस्य च सिद्धत्वात्सिद्धसाधनता शंक्या । सत्त्वावच्छिन्नप्रतियोगिताकभेदस्य विवक्षितत्वात् । न च घटादिनिष्ठभेदप्रतियोगितावच्छेदकता सत्त्वपर्याप्ता । तथासति भवन्मते घटो न सन्नित्यादिबुद्धेः प्रमात्वापत्तेः । यावन्ति सत्त्वानि तदभावकूटवद्धर्मवत्त्वं वा सद्विलक्षणत्वं व्याहृत्युद्धारः प्राग्वदिति सर्वमनवद्यमिति प्रथमनिरुक्तिः । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वं । त्रैकालिकनिषेधस्य तात्त्विकत्वेऽद्वैतहानिः ।

प्रातिभासिकत्वे सिद्धसाधनं। व्यावहारिकत्वे तस्य बाध्यत्वेन तात्त्विकसत्त्वाविरोधितया अर्थान्तरमद्वैतश्रुतेरतत्त्वावेदकत्वं च। तत्प्रतियोगिनो प्रातिभासिकप्रपञ्चस्य पारमार्थिकत्वं च स्यात्। अथ प्रपञ्चाधिकरणीभूतब्रह्मानेकत्वानिषेधस्य तात्त्विकत्वेपि नाद्वैतहानिकरत्वं। यद्वा तात्त्विक एव निषेधः। अतात्त्विकत्वेपि न प्रातिभासिकः किंतु व्यावहारिकः नच तर्हि निषेधस्य बाध्यत्वेन तात्त्विकसत्ताऽविरोधित्वादर्थान्तरमिति वाच्यं। स्वाप्नार्थस्य स्वाप्ननिषेधेन बाधदर्शनान्निषेधस्य बाध्यत्वं पारमार्थिकसत्त्वाविरोधित्वे न तंत्रं किन्तु निषेधापेक्षया न्यूनसत्ताकत्वं प्रकृते च तुल्यसत्ताकत्वात्कथं न विरोधः। नच मनोवच्छिन्नजीवरूपं ब्रह्मरूपं वा चैतन्यमविद्यावच्छिन्नब्रह्म वा स्वाप्नाद्यधिष्ठानमिति तद्धीरेव स्वाप्नबाधः नतु स्वाभावांभावोऽबाधः अधिष्ठानविषयकत्वादज्ञानविषयतावच्छेदकस्यैव ज्ञाननाश्यत्वनियमात्। स्वाप्नस्य प्रातिभासिकत्वेनाज्ञानविषयतानवच्छेदकत्वादिति वाच्यं। अत्रत्याबाधशब्देन मिथ्यात्वस्यैव विवक्षितत्वाच्च। अत एव स्वाप्नार्थस्वाप्ननिषेधयोरन्योन्यबाधकबाध्यत्वलक्षणमपि तुल्यसत्ताकत्वं निष्प्रत्यूहं। नच तर्हि निषेधस्य निषेधे प्रतियोगिनोऽधिकसत्तापत्तिरिति वाच्यं। परमार्थशुक्त्यादिनिष्ठयोः रजताभावतत्प्रतियोगिकनिषेधान्यूनसत्ताकयोः रजताभावनिषेधनिषेधप्रतियोगिकयोर्निषेधः रजताभावान्यूनासत्ताकरजताभावनिषेधप्रतियोगिकः रजताभाववृत्तिः। बाधकाबाध्यत्वलक्षणमपितु तुल्यसत्ताकत्वं निष्प्रत्यूहं। नच निषेधस्य निषेधे रजतप्रतियोगिनो निषेधाधिकसत्तापत्तिरिति वाच्यं। यदीययन्निषेधान्यूनसत्ताकत्वे सति यन्निषेधप्रतियोगिकयोर्निषेधः सः तन्न्यूनसत्ताकतन्निषेधप्रतियोगिक इत्यत्र तद्वृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वस्योपाधित्वात्। तार्किकपरमार्थरजतादिनिष्ठरजतत्वप्रतियोगिके रजतत्वाभावान्यूनसत्ताकतादृशाभावस्य निषेधे रजतत्वान्यूनसत्ताकरजतत्वाभावप्रतियोगि-

कोक्तोपाधेः साध्यव्यापकत्वात्पक्षे साधनाव्यापकत्वाच्च । यथाश्रुते नियमे प्राचीनमते घटात्यन्ताभावन्यूनसत्ताकपटतदत्यन्ताभावान्यतरत्वावच्छिन्नाभावे घटन्यूनसत्ताकतदत्यन्ताभावाप्रतियोगित्वाभावेन व्यभिचारश्च । तत्रहि निषेधस्य निषेध इत्यादिमूलस्यायमेवार्थः । निषेधस्य यत्प्रतियोगिकयन्निषेधस्य निषेधे यन्निषेधन्यूनसत्ताकनिषेधे प्रतियोगिनस्सत्त्वं निषेध्यापेक्षयाऽधिकसत्ताकत्वं प्रतियोगिसत्ताकत्वं व्यवस्थाप्यते । प्रतियोग्यात्मकः तद्व्याप्यो वा निषेधनिषेधो विषयीक्रियते अभिप्रायं स्फुटीकरोति यत्रत्वित्यादिना । अत्र पक्षे घटादिमिथ्यात्वानुरोधेन तदधिकरणे घटत्वादिना तदत्यन्ताभावाभ्युपगमो नावश्यकः । सर्वदृश्यसाधारणयत्किंचिद्रूपावच्छिन्नत्वस्य लौकिकपरमार्थसर्वदृश्याधिकरणे ब्रह्मणि स्वाकारमात्रेण दृश्यमिथ्यात्वोपपत्तिः तथाच यथामतं निषेधनिषेधान्यतरस्य प्रतियोग्यात्मकत्वमधिकरणात्मकत्वमतिरिक्तत्वं वेत्ति नाग्रहः। अतात्त्विकं प्रपंचनिषेधादिकं बोधयन्त्याः श्रुतेरप्रामाण्यं न शंक्यमिति चेन्न । भ्रमकालप्रतीतस्य सापेक्षदृश्यात्यन्ताभावभ्रमकालप्रतीतिनिरपेक्षब्रह्मात्मकत्वासंभवात् । न चाभावस्य सापेक्षकत्वं मायिकं । ब्रह्मणो निरपेक्षत्वं तात्त्विकमिति न विरोध इति वाच्यं । मिथ्यात्वासिद्धेः प्राङ्मायिकामायिकविभागासंभवात् । सार्थबाधस्य निषेधस्य हि ततोऽधिकसत्ताकत्वं स्यादेव । नहि वल्मीके प्रतीतस्य पुरुषत्वस्य तत्रैव प्रतीतस्थाणुत्वेन बाधः । किन्तु वल्मीकत्वप्रकारकज्ञानेन । तथाच स्वाप्नार्थस्य स्वाप्ननिषेधेन विहतिरेव नतु बाधः । वस्तुतस्तु स्वाप्ननिषेधस्य जगत्यबाध्यत्वनिश्चयेन न तस्य बाध्यत्वं । नच स्वप्नद्रष्टृत्वमात्रेण निषेधस्य बाध्यत्वमुक्तं । स्वप्नदृष्टस्यात्मादेरपि बाध्यत्वापत्तेः । न चादृष्टं द्रष्टृति श्रुत्या स्वप्ने दृष्टत्वमेवात्मनो नास्तीति न बाध्यत्वापत्तिरिति वाच्यं । अदृष्टमित्यस्य वृत्तिभिन्नानुभवविषयत्वस्यैव व्याख्यानत्वात् । अन्तःवृत्तेरप्यविषयत्वे यथाहि न मानमिति तथाच

तावतैव घटस्सन्नित्यादिप्रत्ययोपपत्तिरिति भावः। यतस्सत्तादा-त्म्यानामानन्त्यं प्रामाणिकमिति योजना। तत्रावश्यकत्वेनेत्यन्तं तत्र चासंभवादित्यन्तं हेतुः एकस्यैव तादात्म्यस्य कपालादिघटादिनि-ष्ठविशेषणताविशेष्यतारूपविषयतारूपत्वे अवच्छेद्यावच्छेदकभावो न स्यादिति भावः। अत्र दारुशविकसंवादमाह। नहीति। तत्तद्विषय-तेति कपालतन्त्वादिविषयतावच्छिन्नघटपटादिविषयतानामित्यर्थः। सत्तादात्म्यानां नित्यत्वेऽवच्छेदकानियमानुपपत्तिर्वक्ष्यमाणरीत्या गौ-रवं चेति। अतस्तेषां जन्यत्वमाह। तेषां चेति दार्ष्टान्तिकमुपसंहर-ति। तस्मादिति। भ्रमविषयो नस्यादिति। अस्येति तर्कोऽत्रेत्यत्रान्वयः आपाद्यापादकयोर्व्यतिरेकव्याप्तिनिश्चयं दर्शयति। विषयविशिष्टभ्र-मस्येति। विषयतासंबन्धेन इदमादिविशिष्टे भ्रमो मिथ्यात्वप्रति-योगि। इदमादौ भ्रमविषयत्वं मिथ्यात्वं चावगाहमानः तदुभयसह-चारप्रत्ययविधया व्यभिचारग्रहसाहित्येन तदुभयव्याप्तिनिश्चयं जन-यतीति भावः। यद्वा इदमादेर्मिथ्यात्वग्राहकान्तरमाह। विषयवि-शिष्टस्येति। एतेनैतस्य तर्काकारे प्रवेशासंभवेपि नासंगतिरिति बो-ध्यं। इदमादितादात्म्यमिति। रजतावच्छेदेन रजततादात्म्यापत्तिक्षि-प्तिरिति शेषः। सत्तादात्म्यमिति घटावच्छेदेन घटतादात्म्यपक्षक्षि-प्तिरिति शेषः। एवंच रजते इदं तादात्म्यं घटेपि सत्तात्म्यं पर्यव-स्यतीति भावः। मिथ्येति ज्ञायत इति शेषः। तेनाकारद्वयादित्यस्य नान्वयः। नवा घटादौ सत्तादात्म्ये किं मानमिति प्रश्नोत्तरे त-न्मिथ्यात्वमात्रोपसंहारस्यार्थान्तरता। मिथ्यात्वकथनं तु तत्सत्यत्व-शङ्कानिरासाय। भ्रमकाले तदुत्पत्तौ बाध्यत्वरूपयुक्तिसूचनाय मि-थ्यात्वस्य बाध्यत्वरूपत्वादिति ध्येयं। परस्पराध्यासे युक्तिसिद्ध-स्याचार्याननमिमिति शङ्कां परिहरति। तदिदमिति। घटस्याधिष्ठा-नत्वासंभवाद्याचष्टे। अन्योन्यस्मिन्निति। एवं रजते इदमित्युभय-प्राप्यवच्छिन्नत्वमेव समभ्यर्थः। इदं रजतं वस्तुकल्पनस्य सर्वसिद्ध-

त्वाद्रजते इदमर्थकल्पनेपि रजतभ्रमस्य च परिस्फुरणादित्यनेन युक्तिरुक्ता। तत्रास्येति। व्याचष्टे। अस्येति। नयतीत्यत्र इदमर्थमिति पक्षवाचकं कल्पितमिति प्रतियोगिवाचकं च पूरयित्वा व्याचष्टे। नयतीत्यादीति। शुक्तेरपीदंत्वेन भ्रमे भानाच्छुक्तिरिवेति दृष्टान्तासंगतिरतो व्याचष्टे शुक्तिरिवेति। द्वितीयेन दार्ष्टान्तिकमुक्तं। तद्व्याचष्टे। इतरेतराध्यासनाभीति। चितिः सद्रूपाचितिः चेत्थं घटादि दृश्यं। ततस्तस्माद्रजतभ्रमादिष्वित्यर्थं व्याचष्टे। गुरुतरेत्यनुपस्थितविषयकत्वेनान्यत्र क्लृप्तजातीयत्वाभावेनोक्तकल्पनायाः गुरुत्वे युक्तिमुक्त्वा गुरुतरत्वे तामाह। आवश्यकानित्यादिना। नाध्यस्तत्वे तत्स्वीकारेण वस्तुतस्तेषां सत्यत्वं। नचाद्वैतश्रुतिविरोधः। तस्यास्सत्तादात्म्यातिरिक्तद्वैताभावप्रतिपादनपरत्वे नोपपत्तिसंभवादिति शङ्कां निरस्यति। अद्वैतश्रुतिसङ्कोचापत्तेश्चेति। सङ्कोचो द्वैतसामान्यार्थकपदस्य द्वैतविशेषे लक्षणाकल्पनं। तथाचैतत्कल्पनसापेक्षतया एकस्यैवाध्यास इति कल्पना गुरुतरेति भावः। न जन्यत्वं नोत्पत्तिः। किंत्वविद्यादिवदनादित्वमेवेति भावः। तादृशनित्येति घटादिनिष्ठविषयतारूपसत्तादात्म्यरूपनिष्ठेत्यर्थः। उक्तरूपेण कपालाद्यवच्छिन्नत्वेन संयोगादीनां कपालादिकार्यता। तथाचैतत्कल्पनासापेक्षत्वेकस्यैवोत्पत्तिरिति कल्पना गुरुतरेति भावः। इत्यर्थ इति। तथाच रजतभ्रमादिष्वित्यादेश्चिच्चैत्ययोः परस्पराध्यासादौ स्वीकृते सति। रजतभ्रमे परस्पराध्यासादेः दृष्टत्वाद्गुरुतरकल्पना न घटते नापततीत्यर्थ इति भावः। अनुभूत्यादितृतीयश्लोकमुपसंहारतया व्याचष्टे। अनुभूतिरिति तृतीयेत्याद्यपदस्येत्यनुपङ्गः। एवं चतुर्थेत्यत्रापि। तत्र ततस्तस्मादनुभूत्यादितृतीयाच्चिति चैत्ययुगलस्येतरेतराध्यस्तत्वमेव युक्तमितियोजना। विमतं मिथ्येति प्रतिज्ञाया असङ्गतिमाशङ्कते। नन्विति। मिथ्यात्वविशेषस्य प्रतिपन्नोपाधिनिष्ठत्रैकालिकनिषेधप्रतियोगित्वात्यन्ताच्छिन्नत्वस्य साध्यतया कोटितया न्यायप्रयोगे तद्घटक-

प्रतिज्ञया तस्यैव तादृशप्रतियोगित्वावच्छिन्नस्यैव तादात्म्येन पक्ष-
विशेषणतापन्नधर्मिविशेषणतारूपसाध्यतया प्रतिसाधनमुचितमिति त-
स्यैव जिज्ञासितत्वादिति भावः। ननु मिथ्यात्वसामान्यस्येति।
पञ्चविधमिथ्यात्वानुगतरूपावच्छिन्नस्य तदुचितमित्यर्थः। तस्य वि-
प्रतिपत्तिकोटित्वं भावेनाजिज्ञासितत्वेनार्थान्तरापत्तेरिति भावः।
नच विमतं मिथ्येत्यत्र मिथ्यापदस्य प्रतिपन्नोपाधिनिष्ठत्रैकालिक-
निषेधप्रतियोगितार्थकतया नायं दोष इति वाच्यं। तथासति ननु
किमिदं मिथ्यात्वं साध्यत इत्युत्तरग्रन्थानुत्थानापत्तेरिति बोध्यं।
तात्पर्यादिति। अन्यथान्यविधमिथ्यात्वसाधकविप्रतिपत्तिप्रदर्शना-
न्न्यूनतापत्तेरिति भावः। मिथ्यात्वसंबन्धस्य तद्धर्मिणश्च वारणाया-
ह। मिथ्याशब्दप्रवृत्तिनिमित्तत्वरूपमिति ॥ ❀ ❀ ❀

॥ समाप्तम् ॥

## Ready for sale.

1. ADVAITADEEPIKA
2. SRUTHIRATHNAPRAKASIKA

Copies can be had of:—

25 Vichitra Royar Street,
MAYAVARAM.

T. S. NATESA SASTRIAR & CO.,
MAYAVARAM.